# दिव्यज्योतिः



## संस्कृतदिवस-समारोह-विशेषाङ्कः

संस्कृतस्य मासिक पत्रम्



िकमूल्यं ६) रु०  अक्टूबर-नवम्बर १९६७  अस्याङ्कस्य ६२ पणकाः

दिव्यज्योतिः { शिमला
वर्षम् १२, आश्विनकार्तिकौ २०२४ अङ्कौ १-२

( संस्कृतमासिकम् )

## GOVERNMENT RECOGNITION

Divya Jyoti stands approved for Educational Institutions and Libraries by the Education Departments of the following States in India as under :—

1. PUNJAB *vide* No. 2296-220-57-B-38681, dated 5-7-57 and Memo. No 21-60 B. Sanctioning compulsory purchase of the magazine.
2. HIMACHAL PRADESH, *vide* No. E-7-32 dated 23-10-63
3. JAMMU & KASHMIR, *vide* No. G-476-91, dated 18-4-57.
4. MADHYA PRADESH, *vide* No. 2109, P. P. dated 21-8-59.
5. RAJASTHAN *vide* EDB/AB/2/14246/29k60, dated 4-1-961.
6. MAHARASHTRA *vide* S–102/563–H dated 19-5-19651.
7. UTTER PRADESH, Vide No 8264-2203; 18-82 65-66 dated 24-2-66.

*A reliable medium to subscribe, represent or Advertise.*

अस्याङ्कस्य लेखकाः

★ श्री केशवराम शर्मा दर्शनाचार्यः, सं० का० सोलन ( हि० प्र० )
★ श्री हरि बल्लभ शर्मा दर्शनाचार्यः, सं० का० सोलन ( हि० प्र० )
★ श्री सोम प्रकाश शाण्डिल्यः, सम्पादकः—गीता सन्देश · हृषीकेश)
★ श्री आचार्य प्रेम शंकर मिश्रः (म० प्र०) श्री सच्चिदानन्द काण्डपालः, व्याकरणाचार्यः, शिमला, श्री पद्मनाभ जोशी, सोलन । श्री० प्रो० मनसाराम' 'अरुण'' ग० का० सोलन (हि० प्र०) ।

(आवरण पृष्ठे—सभापतयः श्री राजा वीरभद्रसिंह महाभागाः सम्मेलनाध्यक्ष श्री आचार्यपादानामभिनन्दनं स्वीकुर्वाणाः)


## संस्थापकः तथा प्रधानसम्पादकः

विद्यावाचस्पतिः, आचार्य दिवाकर दत्त शर्मा, शास्त्री, काव्यतीर्थः, साहित्याचार्यः, विद्यालङ्कारः
प्राचार्यः (प्रिन्सिपल, सं० का०) शास्त्रप्रवक्ता (अ० भा० आकाशवाणी)

## सम्पादकः

कविरत्न प्रा० केशव शर्मा, शास्त्री, साहित्यरत्नम् , एम. ए.,



## प्रकाशकः

'दिव्य-ज्योतिः' कार्यालयः 'आनन्दलॉज' जाखू , शिमला-१

भवानी स्टीरियोटाइपिक प्रेस शिमला द्वारा मुद्रितम्, सम्पादकः तथा अधिकारी, ''दिव्यज्योतिः''
आचार्य दिवाकर दत्त, द्वारा आनन्दलौज जाखू शिमला १ तः प्रकाशितम्

# सरस्वतीं संस्कृतमाश्रयामः

— श्री केशवः दर्शनाचार्यः

आयान्तु रे भारतमातृपुत्राः
सरस्वतीं संस्कृतमाश्रयामः ।
आर्षोपदेशानवलम्ब्य लोके
स्वजीवनं स्वर्णयितुं व्रजामः ॥

सा भारती या जगदादिकालात्
मृत्योर्मनुष्यानमृतं नयन्ती ।
तमोऽपनोदेन दिशं दिशन्ती
विराजते भारतवर्षमध्ये ॥

इयं धरा कान्तमथान्तरिक्षं
नीलं नभो मञ्जुलवन्यमालाः ।
तारस्वरैः स्वैर्महयन्ति सर्वे
स्वीयामिमां सुन्दरसौम्यवाणीम् ॥

सा संस्कृतिर्या सकलं हि विश्वम्
आराधनीयामथ सेवनीयाम् ।
सम्मानवाणीभिरलङ्करोति
विराजते संस्कृतवाणिमध्ये ॥

यस्या नितान्तं विमलान्तरालाद्
भाषाः समस्ता उदिता जगत्याम् ।
आद्याङ्कुरैः प्रास्फुटि सभ्यताया
महीयसी सैव सरस्वतीयम् ॥

यस्या नितान्तं कवयः कवित्वं
मनीषिणः स्वं मननीयतत्त्वम् ।
संसारिणो जीवनदिग्दिनेशं
वेदोज्ज्वलाभ्यां दुदुहुः स्तनाभ्याम् ॥

यदस्मदीयाः खलु भारतीयाः
समादरं प्राप्नुवते जगत्याम् ।
तत्केवलं संस्कृतवाक्सरण्या
ज्ञानाम्बुवाहप्रसरप्रभावः ॥

कालाच्चिराद्दास्यवशात्तथव
प्लुष्टो गिरो ज्ञाननिधिर्यदस्याः ।
नेया परामुन्नतिमद्य सर्वैः
सर्वैः प्रयत्नैरियमर्हणीया ॥

समागतं भारतसुप्रभातं
उषा नवीना समुदेति चाग्रे ।
उल्लासयन्तीं स्वयमुल्लसन्तीं
आयान्तु शुभ्रामभिनन्दयामः ॥

# नैय्यायिकानामीश्वरः

श्री हरि वल्लभ शर्मा

ईश्वरसत्ताविषयको विवादः चिरात् प्रचलितः नाद्यापि प्रशमं गतः (न प्रमाणतामभजत् इत्यर्थः) । तथाहि-चार्वाकजैनबौद्ध - (माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकप्रभृतयः नास्तिकशिरोमणयः, मीमांसा सांख्ययोगमताऽवलम्बिनः आस्तिक चूड़ामणयश्च ईश्वरं नाद्रियन्ते । यः वेदं प्रमाणमनुमनुते स आस्तिकः । यश्च न तथा स नास्तिकः । इत्यास्तिकनास्तिकयो र्भेदः सर्वलोकसम्मतः ।

तत्र एके एवमाचक्षते चार्वाकादयः यन्नास्तीश्वरः प्रमाणाऽभावात् । 'मानाधीना मेय सिद्धिरिति नास्ति विदुषां तिरोहितम्' । अतः-प्रमाणेनैवेश्वरः साधयितुं शक्यते । परं यदा ईश्वर विषये किमपि प्रमाणमेव नोपलभ्यते तत्कथं मानाऽभावादीश्वरः सिध्येत् । तथाहि—ईश्वरस्य निरूपद्रव्यत्वात् न तस्य वाह्यं प्रत्यक्षं आकाशवत्। सरूपद्रव्यस्य घटादेरेव प्रत्यक्षं कर्तुं शक्ष्यते न तु निरूपस्याकाशादेः । परात्मत्वाच्च न मानसं प्रत्यक्षम् । मनसा खलु स्वात्मन एव प्रत्यक्षं कर्तुं शक्यते न तु परात्मनोऽपि । अतो न मानसं प्रत्यक्षम् । प्रत्यक्षाऽभावाच्च नाऽनुमानस्यापि प्रसरः तस्य प्रत्यक्षपूर्वकत्वात् । सादृश्याऽभावाच्च नोपमानस्याप्यवकाशः संभवति । यत्र हि मुखचन्द्रादि रूपयोर्विभिन्न वस्तुनोः परस्परं आह्लादकत्वादिप्रचुरधर्मवत्वरूपं सादृश्यमुपलभ्यते तत्रैवोपमान-स्यावकाशः यथा चन्द्रमुखोऽत्यादिप्रयोगेषु परमीश्वरसदृशस्तु न कोऽप्यस्ति येन सह तस्योपमानता स्यात् ? तस्मात् सादृश्याऽभावान्नोपमानं संगच्छते । अन्यशब्दप्रमाणमपि नहीश्वरे प्रसरति । आप्त प्रोक्तत्वेन तस्य प्रामाण्याऽभ्युपगमात् । आप्तस्य चात्राऽनुपलम्भात् । तथाहि

"शब्द प्रमाणं सच कस्य शब्दः शिष्टश्चेत् कोऽस्ति जगत्पथीष्टः ।
असत्यवाक् तस्य विनिश्चयः स्यात् केनेति सर्वत्र विवादवार्ता" ।। अतो विवाद ग्रस्तेन अनिर्णीतेन शब्दप्रमाणेन नेश्वरः साधयितुं शक्यः । न च आप्त ईश्वरप्रोक्तत्वेन तस्य प्रामाण्यं संगच्छते । ईश्वरस्यात्र असिद्धत्वात्, अन्योन्यत्रादिदोषापाताच्च । ईश्वरसिद्धिः शब्दप्रमाणाधीना तस्य च प्रामाण्यमीश्वराधीनः इत्यन्योन्याश्रयः । अतो न शब्दप्रमाणम् युक्तम् ।

तस्मात् प्रमाणाऽभावान्नास्तीश्वरः इति चार्वाकादीनां नास्तिकानामाशयः ।

अत्रेश्वरप्रतिषेधाऽवसरे मीमांसकशिरोमणयः एवमीश्वरसत्ताऽभाव प्रसाधयन्ति-। "देवो न कश्चित् भुवनस्य कर्ता, भर्ता हर्ता नच कश्चिदास्ते ।

कर्माऽनुरूपाणि शुभाऽशुभानि प्राप्नोति सर्वोऽपि जनः फलानि" ।।

"वेदस्य कर्ता न च कश्चिदास्ते नित्या हि शब्दा रचनाऽस्य नित्या ।

"आद्यन्त शून्येऽत्र जगत्प्रवाहे क्रियाभवेत् कर्मत एव सर्वा ।

कर्माऽपि पुंसां भवति क्रियातो बीजाङ्कुर न्यायतया न दोषः" ।।

अनेनैव विधिना एतै ईश्वरसत्ता निरस्यते । अतो 'नास्तीश्वरः' इति सडिण्डिमनादमेते सर्वेऽपि नास्तिका विकासिताननाः सन्तः उद्घोषयन्ति ॥

परं वैशेषिकदत्ताऽवलम्बनाः ज्ञानवृद्धाः तर्ककुशलाः नैयायिका पूर्वोक्तं सर्वमपि प्रपञ्च-मसहमानाः, साटोपमीश्वरं प्रसाधयन्ति । वेदान्तानुगामिनश्चताननुमोदन्ते । नास्तिकाग्रगण्याः यवनादयोऽपि च ईश्वरसत्तां समर्थयन्ति ।

सिद्धिश्च तस्य नैयायिकसमयाऽनुसारभीत्या वर्तते ।

अस्तीश्वरः सन्ति तत्र वहूनि प्रमाणानि, अनुमानं हि तत्र प्रधानम् । तद्यथा-क्षितिः सकर्तृका कार्यत्वात् घटादिवत् । यत् २ कादाचित्कं तच्चकारणसापेक्षं, यच्च कारणसापेक्षं तत्कार्यमिति कार्येषु सर्वत्र लोके दृष्टम् । घटो हि कादाचित्कः कदाचित्क जायते अतः कुलालादिकारण सापेक्षः, कारण सापेक्षत्वाच्च तत् कार्यमिति स्पष्टम् ।

एवमस्याः पृथिव्या अपि अस्ति कादाचित्कत्त्वम् शास्त्रेषु सर्गप्रलयश्रवणात् । तेन इयमपि कारण सापेक्षा । कारणसपेक्षत्त्वाच्चअस्यापि कार्यत्त्वं सिध्यति । प्रत्येकस्यापि च कार्यस्य समावाय्यसम-वायि निमित्तरूपाणि त्रिण्येव कारणानि भवन्ति । तत्र कार्यमात्रस्य सकर्तृकत्त्वं प्रतिनियतं वर्तते। अतः अस्याः अपि क्षितेः केनचित् कर्त्राऽवश्यमेव भाव्यम् । यच्च कर्तृत्त्वं नवास्मदादीनामल्पज्ञाना-मल्प शक्तियुक्तानामल्प प्रयत्नवताञ्च सभवति । उपादानविषयकज्ञानचिकीर्षा कृतिमत एव कर्तृत्त्व संभवात् । वयन्तु अल्पज्ञाः अचिन्त्यस्वरूपायाः अस्याः वसुधायाः उपादानकारणभूतानां परमाणूनां कथं सम्यक् ज्ञानं कर्तुं प्रभवामः ? । अपितु सर्वज्ञएव तज्ज्ञानं कर्तुं शकनोति । तथा न चिकीर्षा-प्रयत्नावपि नास्मदादीनामल्प शक्तीनामल्पप्रयत्नवताञ्च भवितुमर्हत ? । किन्तु सर्वशक्तिमत एव । अतः यः सर्वज्ञः सर्वशक्तिमान् स एव क्षितेः कर्ता स च ईश्वरः ।

एवमङ्कुरोऽपि सकर्तृकः कायत्त्वात् घटादिवत् । तथा सर्गाद्यकालीनः घटोऽपि सकर्तृकः कार्यत्त्वात् इदानीन्तनघटवत् । एवञ्च धर्माऽधर्मयोरधिष्ठातृत्त्वेनापि ईश्वरोऽनुमीयते । तथा च अन्या-न्यपि वहूनि सन्ति अनुमानानि ईश्वर साधनाय । यथाह भगवान् न्यायकुसुमाञ्जलिकारः—

"कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः" इति ॥

एवं ये तावत् योगदर्शनकाराः पुरुषविशेषं तु ईश्वरं मन्यन्ते परं जगत्कर्तारं न तं स्वीकुर्वन्ति किन्तु प्रकृतिमेव जगत्कर्तृत्त्वेनाभ्युपगच्छन्ति तदपि न सम्यक् यतोहि प्रकृतिस्तु जड़ा सा कथं जगन्नि-र्माणं कर्तुं प्रभवति । जडस्य कर्तृत्त्वं न क्वापि दृष्टं नापि च संभवति ।

एवञ्च ये वेदान्तिनः ईश्वरस्य जगतः समवायिकारणत्त्वमङ्गीकुर्वन्ति तदपि न साधु । चेत-नस्य समवायिकारणत्त्वे जगतः चेतनत्वापत्तेः । अयं भावः 'कार्यगुणाः कारणगुणानधीते, इति नयेन तन्त्वादीनां पटसमवायिकारणानां श्वेतादिगुणाः कार्ये पटादौ अवलोक्यन्ते ।

श्वेत तन्तुभिः श्वेतपटस्यैव निर्माणम् रक्तैः रक्तस्यैव च इति । अतः—जगतः समवायि कारणं यदि चेतनः पुरुषविशेषः (ईश्वरः) अङ्गीक्रियेत्तदा जगतोऽपि चेतनत्त्वापत्तिः स्यात् । न च तस्य चेतनत्त्वमवलोक्यते । तस्मान्नेश्वरः जगतः समवायिकारणम् । किन्त जगतो निमित्तकारणं कर्ता एव ईश्वरः इति सम्यक् ।

अत्र—कार्यत्त्वाऽनुमाने केचिदेवमाशंकन्ते ननु 'क्षित्यङ्कुरादिकं कर्तृजन्यं शरीराऽजन्यत्त्वादाकाशादिवत्, इति सत्प्रतिपक्षहेत्त्वाभासदूषितं खल्विदं कर्तृत्त्वसाधकमनुमानम् । क्षित्यङ्कुरादिकं सकर्तृक — —' इति)। 'साध्याऽभावसाधकं हेत्त्वन्तरं यस्य स सत्प्रतिपक्षः' इत्येवं लक्षणेकेन शरीराजन्यत्त्वस्यात्र—'कर्त्र जन्यत्त्वरूप' साध्याऽभावसाधकत्त्वात् 'पूर्वाऽनुमाने' कार्यत्त्व हेतोः सत्प्रतिपक्षता सिध्यति। तेन च तस्याऽनुमानस्य वाधो जायते । अतः हेत्त्वाभासदूषितत्त्वात् सकर्तृकत्त्वसाधक खल्विदमनुमानमसंगतमिति चेत् ? न ? अनुकूलतर्काऽभावात् ।

अयमाशय :—यथा 'पर्वतोऽयं वन्हिमान् धूमवत्त्वात्' इत्यत्रसाध्याऽभावद्वृत्तित्त्वरूपा व्यभिचारशंका यदि क्रियेद्यत्—'पर्वते धूमः अस्तु परं वन्हि मास्तु, तदा अस्माकं 'नैयायिकपार्श्वे' अनुकूलस्तर्कोऽयं विद्यते—धूमस्य वन्हि व्याप्यत्त्वात् इति । धूमोहि वन्हिजन्यः, अतः—जनकमन्तरा जन्यस्यासंभवात् 'वन्हिव्याप्योऽत्र धूमः'। यदि वन्हिः न स्यात्तदा धूमोऽपि न स्यादिति 'व्यतिरेक' व्याप्य व्यापकभाव एवात्राऽनुकूलस्तर्कः।

तथैव भवतां कर्तृजन्यत्त्वसाधकाऽनुमाने यदि व्यभिचारशंका क्रियेद्यत् पक्षे क्षित्यादौ साध्यं कर्तृजन्यत्त्वं मास्तु परं शरीराऽजन्यत्त्वं साधनमस्तु तदाऽत्र न कोऽप्यनुकूलस्तर्कः विद्यते। कर्तृजन्यत्त्वशरीराऽजन्यत्त्वयोर्मध्ये व्याप्यव्यापकभावविरहात् । अर्थात् यत्र २ धूमस्तत्र २वन्हिरितिवत्, यद्यत् शरीराऽजन्यत्त्वंतत्र २ कर्त्र जन्यत्त्वं नैतद्वक्तुं शक्यते क्षित्यादेः शरीराऽजन्यत्त्वेऽपि ईश्वररूपकर्तृजन्यत्त्वात् । तस्मादनुकूलतर्काऽभावात् अत्र—कर्त्र जन्यत्त्वसाधकाऽनुमानेन सत्प्रतिपक्षता, सिध्यति यया 'क्षित्यङ्कुरादिक सकर्तृकं—' इत्यादि पूर्वोक्तं सहेतुकमनुमानंवाधितं स्यात् ? अतः—सत्प्रतिपक्षादिदोषाभावाऽत् 'क्षित्य इत्यादि—' सकर्तृकत्त्वसाधकमनुमानं सर्वथा निर्दुष्टमिति स[illegible]। अतः—

सिद्धमनुमानेन प्रमाणेन यदस्तीश्वरः इति। सिद्धे च तस्मिन् तत्प्रोक्तत्त्वेन वेदानामपि प्रामाण्यं सिध्यति। अतः—"द्यावा भूमिजनयन्देव एकः विश्वस्य कर्ता भुवनस्य गोप्ता" इत्याद्यागमाः अपि ईश्वरे प्रमाणतां भजन्ते ।

अपिच—पुराणादिषु श्रूयते यत् ध्रुवप्रल्हादादिभिः भक्तप्रवरैः ईश्वरस्य साक्षात्कारोऽपि कृतः। तस्मादांशिकरूपेण प्रत्यक्षमपि प्रमाणं विद्यतेऽत्र । एवं सर्वप्रमाणसिद्धः ईश्वरः न केनापि व्यपोहितुं शक्यः। नैयायिकसिद्धान्ताऽनुसारं तस्येश्वरस्य स्वरूपञ्च नहि 'सत्यं ज्ञानमानन्दं ब्रह्म – , इत्यादि रूपं वर्तते, किन्तु नित्यज्ञानाश्रयः। ज्ञानेच्छाकृती संयोगविभागादीनामष्टगुणानां नित्यानामाश्रयः सर्वज्ञः सर्वशक्तिमान् स्वीक्रियते ।

सुखं दुःखञ्च नास्ति तस्मिन् तत्कारणयोः धर्माऽधर्मयोरभावात्, धर्माऽधर्मौच रागद्वेषाऽभावान्न भवतः। रागद्वेषौच मिथ्याज्ञानाऽभावान्न भवतः। अयमेवास्ति नैयायिकानामीश्वरः। अत आह तत्र भगवान् उदयनः न्यायकुसुमाञ्जलौ—

१. "इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो,
मूलत्त्वात् प्रकृतिप्रवोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः,
साक्षात् साक्षितया मनस्यभिरतिं वध्नातु शान्तो मम"। ।।

२. साक्षात्कारिणि नित्ययोगिनि परद्वाराऽनेपक्षः स्थितौ,
भूतार्थाऽनुभवे निकृष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदृष्टिविगमः प्रभ्रष्टशंकातुषः,
शंकोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ।।।

उपन्यासः

# श्री सुभाष—चरितम्

श्री प्रेम शङ्कर मिश्रः

(गताङ्कादग्रे)

(१३)

श्रीमतां वसुमहोदयानां भाषणमुपश्रुत्य भारतीयानां हृदये समुत्साह भावना व्याप्ता "जीवति सुभाषः" "जनसौख्याय प्रवृत्तो वसुमहोदयः" देशस्वातन्त्र्य विधानाय वसुमहोदयः समागच्छत्येव" अहो ? अस्माकमेव सौभाग्यं यद्वसुमहोदयो विरागभावानाश्रित्य गुहानिवासितां नोपपन्नः न वा चलितमस्तिष्कतया किमप्यशोभनीयमाचरणं समाश्रितवान् धन्योऽयं भारतमातुः स्नेहपात्रीभूतो महामानवः, भगवता एतेषां कार्ये साफल्यं दीयेत एतादृशाः विविधा आलापाः भारतीयानां समाजे सर्वत्र प्रसारं प्राप्ताः । जननायकाश्च वृतान्तेनानेन मुदितान्तराला अपि हृदयनिहितमानसभावा एतद्विषये गाम्भीर्यं मौनं चाकलयन् । नीतिवैविद्ध्य हेतोः पृथकविचारधारिणोऽपिजनाः वसुमहोदयानां कार्यप्रवणतां, समुत्साहं, दृढ़तां च मुक्तकण्ठतया प्राशंसन्त । सर्वत्रापि समये २ तद्विषयिणी वार्ता प्रसृता भवतिस्म । भारतीयानां विवशता विवद्धेन मानसविहंगेन स्वतन्त्रभावनाकाशे पक्षौ वितत्योड्डयनस्यावसरः प्राप्तः ।

अपरतः शासकानां हृदये पदे पदे संक्षोभस्य, त्रासस्य भावा आगच्छन् । स्वकीयराज्यं हतप्रायमेव ते आकलयन् । मानसभावनागोपनपरायणास्ते बहिः दृढ़तां प्रदर्शयन्तोऽपि मानसे कम्पमिवानुभवन्तिस्म । भारतीयानां हृदयें सुभाषस्यादर–भावना न समागच्छेत् इति हेतोरेभिः प्रसारितम् यत्सुभाषस्य वक्तव्येषु विश्वासो नैव करणीयः भारतेऽराजकतायाः प्रसाराय जर्मनं देशेनेयं कूटनीतिः समाश्रिता । भारते नभोवाणी द्वारा वैदेशिकदेशानां विशेषतः "आजाद हिन्द रेडियो" सन्देश श्रवणे प्रतिबन्धः प्रारब्धः । परिस्थितिजटिलतामनुभूय पूर्वं भारते पदे पदे कृत–कूटनैतिक–प्रयोगा अपि दुर्दान्ताः गौराङ्गाः कूटनीतिप्रयोगानौचित्यघोषणे प्रवृत्ताः । एतेन रहस्येन भारतीया सर्वथा अपरिचिता नासन् ।

अनेकशो नभोवाणी यन्त्रमाध्यमेन श्री वसु महोद यानां सन्देशं श्रुत्वा भारतीयैः स्पष्टत एव गौराङ्गशासकवक्तव्यानां निःसारता ज्ञाता । प्रतिदिनं तदीयवाणी

श्रवणेन मानसे भारतीयगौरवं स्वतन्त्रतावाप्तिकृते संघर्षभावना च हृदये धारिता। सत्वरमेवैतेषाँ छलपरायणानां शासनमपनेयमिति निर्धारणपराः जाताः।

गम्भीरध्वनिप्रसारकारी मृदङ्गोऽन्तःसारविहीनो भवति तथैव केवलया सांत्वनवार्तया स्वातन्त्र्यसिद्धिर्नैव भविष्यति इति विचारान् स्वकीयमानसे दधानो वसुमहोदयः सैन्यचयने संघशासनदृढ़तायाम्, नवीनतमविचार–शस्त्रप्रयोगनैपुण्ये च सदैव सचिन्तोऽतिष्ठत्। सुदूरपूर्वस्थे देशे गत्वा भारतीयानां स्वातन्त्र्यविधान भावना तन्मानसे सर्वदा जार्गातिस्म।

स्वकोयमातुर्भारतस्य स्वातन्त्र्यचिन्तां बिदधतां श्रीमतां वसुमहोदयानां हृदन्तराले विघ्नादिचिन्ता कदापि नागच्छत्। स्वप्नेऽपि स्वकीयमार्गरोधकारिणीं शक्ति सः किमपि नागणयत्। नवा प्रियतमानुरागशालिनि मानसे काञ्चनगौराङ्ग–शालिन्या आलुलायित–कुन्तलायाः कान्तायाः सौन्दर्यमधुरिमा तदोयहृदयबन्धनं कर्तुं समर्था नच मृदुलालापदन्तुरिताननमधुरायाः स्नेहपुत्तलिकाया इव स्थिताया अनिताया पुत्र्याः वात्सल्यरसधारा तदीयपथवाधां कर्तुं शक्ता सत्यमेवेदं तथ्यं वर्तते यद् हृदय–निहित–कर्तव्य-गुरुभारा महानुभावा विघ्नावली–जाल–जटिलतामिव विविध-प्रमोदविलासपूरित–सांसारिकानन्द-रस-धारामपि नैव गणयन्ति। तथा च सर्वदा विचारपूर्वकं कठिनपरिस्थितावेव स्वीयाद्वितीयेन व्यक्तित्वेन मार्गनिर्माणं कुर्वन्ति। समक्षमुपस्थितायाः मधुरायाः कटोर्वा परिस्थितेः पराजयाय सन्नद्धतैव तेषां महती विशेषता भवति।

जयप्राण (जापान) देशेन सुदूरपूर्वक्षेत्रे मित्रराष्ट्र (अमरीका प्रभृति) सैन्यं पराजित्य "सिंगापुर" नामवं नगरं स्वायत्तीकृतम्। तस्य नाम परिवर्तनं विधाय "ओनान" इति कृतम्। अस्य शब्दस्यार्थः तद्देशीयभाषायां "पूर्वस्य प्रकाशः" इति भवति। कालचक्रस्य तीव्रतमा गतिः स्व प्रभावेण मेरुसदृशभूधरानपि कणशः, सिकताकणानपि प्रोच्चशृंगान्वितभूधरतां नयति। रम्यनगराण्यपि भीषणकाननतां विशालारण्यानीमपि विविधसौध–सुविशालप्रासादान्वित जनपदतां प्रापयन्ती सर्वदा विजयते। यस्याः प्रभावेणांगलसाम्राज्ये भास्वानपि नास्तमुपयातीत्येषा ख्याति रप्यन्यथात्वमापादिता।

निखिलसैन्यसंग्रहं रम्यं नगरं च विहाय पश्चात्पदा गौराङ्गाः पूर्वीयां राज्य संरक्षण-स्थितिमन्वेषयन्तिस्म। साम्राज्यान्तर्गतस्य ब्रह्मदेशस्य संरक्षणचिन्ता तन्मानसं न केवलमुपतापयितुं प्रवृत्तासीदपितु तद्रक्षा तेषां प्रतिष्ठायाः जीवनस्य प्रश्नतां प्राप्ताभवत्।

त्रिचत्वारिंशदुत्तरैकोनविंशतितम (१६४३) जुलाई मासे चतुर्थ तारिकायां सिंगापुर नगरान्तराले एकस्याः महा सभायाः" आयोजना कृतासीत। समस्तमपि नगरं भारतवर्षीयराष्ट्रिय–त्रैवर्णिक-ध्वज-माल्यतोरणैः समलङ्कृतम्। सर्वत्र सिक्तराजमार्गः तन्नगरं विशुद्धहृदय

तया प्रसन्नमेवातिष्ठत् । अस्याः सभाया उद्देश्यमासीत् सुदूर पूर्व-क्षेत्रे प्रवासिनां भारतीयानां संघटना तथा तन्मानसेषु विदेशीयशासकैः सह युयुत्सा समुत्पादनम् । त्रिंशलक्ष परिमिताना मेतेषां वर्गेषु अपरिमितबलमाधायैतेषां सम्पर्केण महती योजना निर्मित्सितासीत् ।

भारतदेशसमुन्नयनभावान्स्वकीये मानसे संस्थाप्य बन्दी जीवनं विहायाद्य यावदितस्ततः पर्यटन शीलस्य वसुमहोदयस्यात्र जनसाधारणसभायां सर्वप्रथमं भाषणं भवितेति धिया दिनद्वयपूर्वमेव जर्मनी देशादत्र समागतस्य तस्य दर्शनाय विशालजनसमूहोऽत्र समवेत आसीत् । दर्शनोल्लसित हृदयेन सतृष्णलोचनाभ्यां मूर्तीभूतप्रतीक्षामिव स्थितानां भारतीयतासमर्चकाणां प्रवासि भारतीयानां समूहो निश्चल इव नीरवतया च संस्थितः । सहसा सुमधुर सैनिक वाद्येषु "बन्दे मातरम्" गीतिध्वनिं कुर्वत्सु "जयतु भारतमाता" क्रान्तिर्विजयतेतराम् "साम्राज्यवादो विनश्यतु" जीयतां श्री सुभाष चन्द्र वसु महोदयः ।" प्रभृति प्रोच्चघोषणा रोदसी पर्यपूरयत् ।

श्री रासविहारी वसु प्रभृति नेतृसहकृतः श्री वसु महोदयः सभास्थलं प्राविशत् । दर्शनोत्सुक-भारतीय-प्रवासि-जनता-लोचन- पंक्ति माला- निर्निमेषतया पश्यन्ती, कुमुदनी नायकपरमामोद-प्रदांशुजाल-मालाच्छुरित कैरवचक्रवालमिवाभासत । आसीच्च तन्मानसेषु –अहो सुदिनमद्यास्माकं यन्मातृभूमि-स्वातन्त्र्यावाप्तिकृते सर्वस्वत्यागपरायणम् तीव्रगत्या कार्यविधायकतया मूर्तीभूतसमुत्साहभावनेवसंस्थितम् जाग्रतवीरभावम्, भारतीयानां मानसे प्राप्तस्नेहम्, साम्राज्य वादिनां भारतदलन-शोषणावाप्तमदघूर्णितानाम् तदपि द्रव्यापहरणेन दस्युतापन्नानाम्, साँस्कृतिक-धार्मिक-सामाजिक-राजनैतिक-आर्थिक-पतनप्रवर्तकाणाम् गौराङ्ग शासकानां कृते महाकालायमानम्, मूर्तिमन्तं विध्वंसमिवकृतप्रचारम्, श्रीमन्तम्, नरसमूह रञ्जकं श्री वसुमहोदयमालोकयामः ।

एष महात्मा बाल्यादेव कठोर-जीवन- चर्यानुरागं दधौ, मातृस्नेह लालनोपयुक्तेऽपि वयसि वसुन्धरा क्रोडमेवारोचत, तपश्चर्याम्, मानवसेवाम् समुत्सर्गभावनाम् प्राचीनसंस्कृत्यनुरागम् नवीनतासमादरम् समन्वय-रम्यताधानादिभिर्निर्माय भारतमातुः समुत्सङ्गे समर्पयितु प्रयत्नानाचचार ।

धन्या चैतदीया शारीरिकी मानसिकी दृढ़ता, यामनुसृत्यायं दृढ़तर-नियन्त्रण गर्वितानां भारत देश शासकानां लोचनयोः धूलिक्षेपणं विधाय, स्वीयान्प्राणान् करयोः संस्थाप्य, काठिन्य दस्युमण्डल- भीति-समन्विति- संशय-प्रापितजीवनमपि मार्गमविगणय्य, सुखजातं समुत्सृज्य भारत स्वातन्त्र्यचिन्तन-रत-मानसोद्वेल्लितः, सुदूरतमप्रदेशे प्रयातो विविध-वेश-विधानेन गुप्त चरानपि विफलप्रयत्नानकरोत् ।

श्री वसु महोदयानां स्वागतायोजकेन श्री रास विहारी महोदयेन तदानीमेव प्रतिपादितम् । एते महोदयाः ? विगतदिवसद्वयपूर्वमेव समागताः अस्माकं मध्ये । प्रचुराणि दिनानि व्यतिगतानि यदैतै र्वसु महोदयैः विविधसौख्यपूरितमपि नियन्त्रिततया कण्टकाचितं स्वीयं गृहम्, पराधीनता-पाशबद्धां जन्मभूमिंच हित्वा तदीयसौख्यविधानाय प्रस्थितम् । तदा प्रभृत्येवैतेषां दिदृक्षाऽस्माकं मानसे जागर्ति स्म । अस्माकं कर्णौ एतदीय-वाणी-सुधास्वादन-समुत्सुकतां धारितवन्तौ । सुदैवोद-येनास्माकं विपत्सहस्रजालं तीर्त्वा समस्तमपि जगदाश्चर्यसागरे पातयित्वा, इमे महोदयाः अस्माकं मध्ये स्थिताः । वयमद्यैतेषां सारगर्भिताम्, घोरान्धकारापनयनपूर्वकं मार्गनिर्देशानकारिणी वाणीं श्रुत्वा मानसबलं प्राप्स्यामः । भारत-भारती- भारतीयतासमुन्नयनयोजनापरिचयं

लप्स्यामः। अस्माकं सौभाग्यमेवेदम् । समस्त–प्रवासि-भारतीय-जनता-भावानुसारमेतेषां हार्दिकमभिनन्दनं कुर्वन्नहं महान्तं गौरवमनुभवामि तथा च भगवन्तं भक्तिप्रवणमानसेनाभ्यर्थयामि यदेतेषां कृते दीर्घायुषो, बलस्य, कर्तृत्वशक्तेः, लोकोत्तरक्षमता प्रदीयेत्।

एवं कथयित्वा सुमधुर-सौरभ-पूरित-सुमनोमाल्येन वसु महोदयानां कण्ठदेशमभूषयत्। अन्ये नेतारश्च माल्यार्पणेनैतानभ्यर्चयन् । तदानीं करतालिकावादनसमुत्थो ध्वनिः सभास्थले समपूरयत्। तदनु संजाते सूचीपातलक्ष्ये नीरवत्वे मेघनिर्ह्लादिनी वाणी जनैः श्रुता। :—
मदीयाः प्रिय बन्धवः ? भगिन्यश्च ? चिरात्प्रभृति मातृभूमेः सुदूरस्थलस्थित्या निर्विण्णचेता अहमद्य स्व-जननी-परतन्त्रता–पाश-छेदन-दत्तमानसानां भवतां मध्ये परमामोदमनुभवामि। स्वीयत्वेन स्वीकृत्यात्रभवद्भिर्मदीयं यत्सम्माननं कृतं तत्कृते हृदयेन कृतज्ञतां धारयामि। भवतां स्नेह भावना मम पथान्धतमसोऽपसारकं मनसोऽति प्रसादकं निर्मलं ज्योतिः। यदपि स्वल्पं किमपि मया विहितं विधित्सते च तत्सर्वं भावत्कस्नेहसम्बलबलावाप्त्यैव न तु स्वेन केनापि बलवत्वेन। तथापि भवन्तो निजसेवकममुं जनं सम्बर्द्धयन्तो मुदमावहन्तीति भवतां परमौदार्य्यमेव । सर्वदाहं भगवन्तं प्रार्थये यन्मम स्वकीयजीवनस्यान्तिमक्षणपर्यन्तमपि भारतीयबन्धूनाममीषं भावनायाः सदृशं कर्म विधानं विना क्षणमेकमपि नो व्यतिगच्छेत् ।

साम्प्रतिकः समयः क्रान्तेः समयोऽस्ति । सर्वमपि संसारेऽद्य जागर्तिभावना व्याप्ता। दैव-दुर्विपाकावाप्त-बुद्धि-वैपरीत्य-जनित-कृत्य-वैधुर्य्य-लब्ध–पारतन्त्र्य–पाशानां देशानाँ हृदये भावना जागृता यदस्माभिश्छिन्नभिन्नतां प्राप्य पाशं नियन्त्रणं च दूरीकृत्य स्वातन्त्र्येण कर-चरण प्रसारणे विधेयं सत्वरमेव। कतिपयेषु स्थानेषु तस्य प्रभावोऽप्यालोक्यते। जनतायाः हार्दिक बलेन नैतिक प्रवृत्या एव सर्वमपीदं रोद्धुमर्हति । निजजन्मभूमि-चिन्तनैकतान–मानसा-भवन्तोऽत्र समवेताः । अत्रावसरे सर्वैरप्यस्माभिः भारतजनन्याः गौरवपूर्णं प्राचीनं चित्रं स्वकीय लोचनयोः पुरः संस्थापनीयं तदनु विचारणीयं च यदेतादृशशौर्य्य-विज्ञान-साधन-समन्वितत्वेऽपि कथमस्माभिः परवशं वदता रूपोऽभिशापो लब्धः मदीयोऽयं दृढविश्वासो ऽस्ति यद् विचार प्रवणानां श्रीमतां मानसे इमे एव विचारा आगमिष्यन्ति । यदस्माकं पराधीनतायाः हेतुरस्माकं विलासभावनालस्यं स्वार्थलिप्सा च वर्तते।"

एतस्य निराकरणाय देशेऽस्माकं जननायकैपूर्वकालादेव बहुधा प्रयत्ना अनुष्ठिताः किन्तु पर्याप्त कालंयावदस्माकं कापि चिकीर्षा नैवावलोकिता अद्यत्वे संसारे स्वार्थ भावानां संघर्षो विश्व युद्ध रूपेण प्रादुर्भूतोऽस्ति । अस्मिन्नवसरे निश्चेष्टतया स्थितिरस्माकं स्वकीयसमाजदेश मानवता कृते विघातिका भविष्यति । एतत्कृत्वा भारतीयैरात्मविनाशिनीनीतिसमुत्सारणं विधाय सर्वदा कृतिपरै र्भाव्यम् । जन हिताय चेष्टनीयम् । तथा भारतमातुर्निगडच्छेदनाय दत्तमानसै रस्माभिरद्य हुङ्करणीयम् । वयमद्य पुनरप्येकवारं शत्रु दल–निर्घात कारिणीं गर्जनां चिकीर्षामः। स्व जन्म भूमे सुदूरप्रदेशान्तरालस्थता भवन्तो यदा मानसे स्वकीयदेशस्य विषये किमपि चिन्तयन्ति तदा भावत्के अन्तरालेऽतीवसन्तापो जायते इत्यपि मया सुस्पष्टं ज्ञायते। अद्य संतापस्य-लोकस्य–रोदनस्य च स्वल्पोऽप्यवसरो नास्ति। न चायमवसरोऽस्ति विनय-प्रणयादिकस्य पश्यत भारतेद्यतने हिमकणो ऽप्यङ्गारतां प्राप्तो विलोक्यते । महात्मागान्धिनो शान्तिधारा क्रान्ति ज्वालां सर्वतः प्रसारयति । इतश्च वयमेकीभूताः शस्त्रास्त्र सज्जिताः गौराङ्गानां दुर्ग

धूलिसात्करणे प्रवृत्ताः भवामेत्यस्याद्यातीवावश्यकता जागर्ति। युगस्याहवानं भारतमातुराकारणाँ वयं नैवोपेक्षिष्यामः ।

गौराङ्गाः साम्राज्यवादिनः, कूटनीतिपरायणाः, बहो कालादस्मदीयदेशे सौख्यमन्वभवन्। तर्हि यैः कर्मभिरस्माकं देशे प्रसारो लब्धस्तेषामपि विस्मरणमस्माभिर्नैव विधेयम्। व्यापारभावनां धारयित्वा समागताः प्रार्थनादिभिः प्राप्ताधिकाराः अस्मद्देशीयानां विनाशे प्रवृत्ताः। प्राचीनकला-कौशल-परायणाः श्रमजीविन एतैः समूलं विनाशिताः । प्रचुरकालं यावत् वशङ्गता वयं स्यामेतिहेतोरेभिरस्मज्जीवननिर्माणकृते निजदेशस्य वस्तूनामनुत्तमानामप्याधारोऽस्मभ्यं प्रदत्तः। अपरतश्च भेद भावना सर्जनपुरः सरं चाटुकारितयैकस्य चरणार्चना द्वितीयस्य विनाश-कारिणी नीतिराचरिता । येनाचरणेनावाप्तगर्वभावना अस्मदीया जनाः स्वयमेव पारस्परिक विनाशे कलहे च प्रवृत्ताः। पारस्परिकसंघर्षेण सौहार्दाभावे विनाशमुपयाते प्रशंसामात्रानुरा-गिणि तात्कालिके जननायक वर्गे अवसरं प्राप्य प्राप्ताधिकारा एते वैदेशिकाः क्रमशो भिक्षुपाद-प्रसारणन्यायमाश्रित्य संस्थिताः। राजानो वशंवदतां नीताः, धनिनोऽपि चरणचुम्बनधन्यंमन्यमान-परायणतां प्रापिताः । यथाकालं जागृतापि स्वातन्त्र्यज्योतिरेभिः स्वकीयकूटनीतिप्रयोगेण, अस्माकं पारस्परिकविद्वेषलाभेन, पैशाचतापन्नक्रूरहिंसाप्रयोगेण, भृशं प्रशमनमुपनीता। तदनु प्रार्थना प्रवणतामस्माकं मानसेषु निधाय गर्विता अगर्जन्तः किन्तु परमात्मना भारतस्योपेक्षा कदापि न कृतेतिस्वीकर्तव्यमेवात्र वारं वारं जनिहेतोरनुरागाधिक्यमिति संभावयामः।

समये २ जनजागरणकारका अत्रसमुद्भूताः स्वीयकालस्थित्यनुसारं तैर्भारतजागर्ति प्रयत्नाः कृता । भावनाया एव महत्वं भवति नतु साफल्यस्य । भावशुद्धौ कर्तव्यनिर्धारणेन स्वकर्मणि प्रवृत्तिरपेक्षिता भवति।

ऐतिहासिकत्रुटि संमार्जन पुरःसरं भारतमातुर्बन्धनमोचनायास्माभिः प्रयत्नः कर्तव्यः। साम्प्रतमपि भारतेः समस्त–जनता-सौख्य-निधानदत्तमानसानां महानुभावानां नैयून्यं नास्ति । न च तैर्निद्राग्रस्तैः स्थीयते किन्तु तेषाँ नीतिर्नैवाभिरोचनीयतामर्हति । शक्तिसंचयनं विधाया स्माभिरार्जवं कुटिलेषु न नीतिरिति सर्वदा ध्येयम् । "उत्तिष्ठत जाग्रत कर्म परायणाः भवत" इति घोषणा विधेया। आवेशसहकृतां विचारप्रवणतां कर्तव्यभावनां स्वबन्धुप्रीतिबुद्धिमत्तां च स्वीकृत्य वयं समुत्थिताः भवेम। ब्रिटेन देशीय-साम्राज्य कलङ्कमस्माकं देशादनतिचिरमेवाप-सरेदितिकृते चेष्टां कुर्याम। भवतां प्रयत्ने, विचारे, कर्मप्रवृत्तौ च सर्वदायं जनो मानसिकशारीरिक सहयोगसमर्पणाय सन्नद्धोऽस्ति। शान्तिप्रवणतया मामकीना विचाराः भवता श्रुताः । विचारयित्वा तत्र प्रवृत्ता अपि भविष्यन्ति। भवतामौदार्य्यं हृदयेनाभिनन्दयन् धन्यवादेनाभ्यर्थयन् श्रीमतोऽहं विरमामि। (जयतुभारतम्) जयहिन्द। —क्रमशः

----

**आर्जवं हि कुटिलेषु न नीतिः**

— भारविः

# प्रतीक्षा | श्री सोम प्रकाशः

स्थानम् :– (महाविद्यालयस्य एकस्मिन् कक्षे छात्राः प्राध्यापक महोदयश्च)

जगमोहन :– अध्यापक महोदय, कीदृशं मनोहरं प्रतिभाति मेघावृत्तं नभः नाद्य किमपि पठितुं मनुते मनः भवान् अनुजानाति चेत् कांश्चित् शब्दानेव व्युत्पादयेम ।

प्राध्यापक :—सम्यक्, अवश्यमन्योन्यं शब्दार्थाः व्युत्पादनीयाः । अनेन साधारणज्ञानम् अपि वर्धते ।

विद्यासागर :—तर्हि जगमोहन, त्वमेव वद गुडइवनिंग शब्दस्य कोऽर्थः ।

जगमोहन :—(सपरिहासम्) प्राध्यापकमहोदय, अहं कथयानि । श्रृणु रे मन्यताम् । कस्यचिद् आपणिकस्य पार्श्वे विपण्याम् गुड़ नास्ति स लौकिकभाषायाम् ग्राहकम् किं कथयिष्यति ? एतदेव न यत्गुड़ इव नि'' अध्यापक महोदय एतदेव न ?

प्राध्यापक :—धिङ् मूर्ख। किमेवं अशुद्धम् प्रलपसि। न तावत् गुड इति मधुरद्रव्यवाचकः। गुड इति शुभार्थकम् विशेषणम् । इवनिंग इतिसायम् । इत्यर्थकम् च विशेष्यम् । अस्य स्पष्टार्थः वर्तते शुभम् सायम् इति ।

विद्यासागर :– ननु प्राध्यापकमहोदय, सण्डे शब्दस्य का व्युत्पतिः ।

रमेश :—अपैहि मूढ, नेतदपि जानासि। श्रुणु तावदहं कथयामि । यो हि नित्यं बहुभोजनात् स्थूलांगः चंचलप्रकृतिश्च जायेत् स लौकिकवाण्यां सैण्डा इति कथ्यते। यतोहि अस्मिन् दिवसे अपि जनानामवकाशो भवति अतश्च ते यथेच्छं भुत्क्वा सण्डे जायन्ते अतो रविवारः सण्डे इत्य-भिधीयते ।

प्राध्यापकः—(सव्यंग्यम्) सम्यग् व्रवीषि रे रमेश, किं कथ्यते तवार्थस्य । मूढ नेतदेवम् । श्रुणु तावत् । सन् शब्दः सूर्यपर्यायः । डे च दिवसपर्यायः । यथा अत्र संस्कृतस्य रविवारः भारतीयानाम् सूर्यस्य दिनम् तथैव आँगलीया अपि 'सण्डे' इति सूर्यस्य दिनमेव मन्यन्ते एतद्दिनम् ।

विद्यासागर :—तर्हि अध्यापकमहोदय, 'काण्डैक्टर' शब्दस्य का निरुक्तिः ?

रमेशः—अपेहि रे मूढ, एतावत् पठित्वा अपि त्वं मूर्खः एवासि। कर्णस्य डाक्टरः काण्डैक्टर अर्थस्तु संक्षिप्तः स्पष्टार्थः एव शब्दः ।

प्राध्यापक :—धिक् निर्बुद्धे, न कॉण्डैक्टरः कर्णस्य डाक्टरः भवति काण्डैक्टरस्तु मोटरयानस्य त्रिकटवितरकः भवति।

विद्यासागर :– अध्यापकमहोदय, सम्यगाह भवान् । परं भवन्मतेन वैज्ञानिकी सर्वोत्तमा का भाषा ।

रमेश :—श्री मन् अहम् कथयामि। प्रथमा तु आंगलभाषा द्वितीया उर्दू तृतीया च पतिततमा भाषा संस्कृतम् । यस्याश्छात्राः लोकभाषाशब्दैः एवं परिचीयन्ते :—

सिर से घोटम घोटा गौ की पूंछ सा रख लें चोटा।<br>
कान में जनेऊ हाथ में लोटा बगल में पुस्तक हाथ में सोटा।।

विद्यासागर :—आंगलभाषाध्यायिनश्च कथं विशिष्टाः।

रमेश :—भद्र, किमेषां पृच्छ्यते । एते तु विचित्रलोकविहारिणः । श्रुणु एषामपि वैशिष्ट्यम् । लोकभाषायामेव ।

हाथ में कापी नहीं किताब, बैठके कभी न करें पेशाब ।
कोट और पेण्ट रहें बेदाग, सिनेमा के सुनते हैं राग ।।
पांव में पहने बूट जुराब, सभी पर रखते अनुचित धाक ।।

प्राध्यापक :— अलमति चापलेन । किम् अनर्गलम् प्रलपसि । न जानासि कक्षानुशासनम् ।

विद्यासागर :—प्राध्यापकमहोदय, कांश्चिदन्यानपि शब्दान् पृच्छेयम् । पठितुं न मनः मनुते (जगमोहनमभिलक्ष्य) भद्र जगमोहन तर्हि कथय को एजुकेशन शब्दस्य कः सम्यक्व्युत्पत्ति-लभ्यः शब्दार्थः ।

जगमोहन :—त्वं तु नितरामेव अल्पज्ञः । नेतदपि जानासि । कथं त्वया मैट्रिकपरीक्षा इत्थम् समुत्तीर्णा श्रृणु तावत् । अहमस्य विशिष्टार्थं कथयामि । को शब्दस्यार्थः वर्तते काकः इति । एजुकेशन इत्यस्य च इंजैक्शनम् इति । काकस्य रूग्णावस्थायाम् यद्विशिष्टम् इंजैक्शनम् क्रियते तदैव कोएजुकेशनम् इत्युच्यते । इंजैक्शन तु विकृतः एजुकेशन शब्दः ।

प्राध्यापकः—अलम् प्रलापेन । त्वं सर्वदैव परिहासमाकलयसि । सत्यमेव कक्षाविदूषकोऽसि त्वं कोएजु-केशनशब्दार्थो विद्यते बालकबालिकानाम् सहाध्ययनम् । एजुकेशनशब्दार्थ :— शिक्षार्थकः ।

विद्यासागर :–एवमेव प्राध्यापकमहोदय, ननु केचन जनाः सहशिक्षाम् अपि गर्हयन्ति तेषां तु इयमात्यन्तिकी धारणा यत् ।

घृतकुम्भसमा नारी तप्तांगारसमःपुमान् ।
तस्माद् घृतं च वन्हिं च नैकत्र स्थापयेद् बुधः ।।
अनयोः द्वयोः सहावस्थानं हानिकरमिति ।

प्राध्यापक :—अवधीयताम् विद्यासागर, अतीतः स पुरातनो युगः । एतानि तु गर्हितानि एव सामाजिकमन्तव्यानि । प्राचीना जना पादपांसुमिव नारीम् मन्यन्ते स्म । ततश्च तासां समशिक्षाधिकारः कीदृशः ?

विद्यासागर :—ब्रवीति तु भवान् सम्यगेव । दृश्यताम् अद्य नार्याः कीदृशं गौरवं वर्धितम् । श्रीमन् अहंतु सहशिक्षायाः सर्वोत्तमं लाभम् इदमेव मन्ये यत् कन्या यथेच्छं वरं वृत्वा निखिलं स्वजीवनं सफलयति ।

प्राध्यापकः—सत्यं भद्र अद्यतनः समाजः प्राचीनं रूढ़िपाशं छित्वा प्रगतिपथगामी वर्तते । पित्रोरपि कन्यादेयभाराद् विमुक्तिर्भवति ।

जगमोहन :—(विद्यासागरमुद्दिश्य) सत्यं अधुना मया ज्ञातम् । यः शिक्षालाभस्ते जातः । विद्यासागर । त्वद्विषये सर्वमहं जाने । अधुनैवावकाशे तव पितरं संसूचनार्थं अहं गच्छामि । क्वासौ

प्रकाण्डपण्डितः क्व च त्वादृशः प्रेमपथपथिकः सुतः। अद्याहं सर्वां त्वत्प्रेमकथां तस्याग्रे कथयिष्यामि।

प्राध्यापक :—अलमनर्गलभाषितेन । निर्गम्यताम् कक्षागृहात् । नाल्पमपि लज्जेथे । (उभौ एव निर्गच्छतः )

विद्यासागर :—यथेच्छं संसूचय । किमत्र गोपनीयम् । नाक्रोशादधिकम् किमप्यनर्थमापतिष्यति। किं न जानन्ति पितृपादाः मत् स्वल्पोऽपि तेषां क्रोधः स्वपुत्रप्राणापहारको भवेदिति। मां तु प्रागेव स संस्कृतशिक्षया देवं निर्मातुं बद्धपरिकरः। गच्छ। कथय। यदिच्छसि।

जगमोहन :—एषोऽहं गच्छामि। (निर्गच्छति) पटपरिवर्तनम्।

॥ द्वितीयं दृश्यम् ॥

स्थानम् :—पं० जगदीशभट्टः पूजानिवृत एव। जगमोहनः तत्पुत्रस्य क्वचित् विद्यालयच्छात्रया सह प्रेमसम्बन्धं सूचयितुं तं उपतिष्ठते।

जगमोहन :—पण्डितवर, जयतितरां श्रीकृष्णः।

पण्डित :—शुभं ते भूयात्। कथय तावत् केन प्रसंगेन अत्र आगमनम्।

जगमोहनः—कीदृशः प्रसंगः श्रीमन्, ननु इदमेव भवत् सुपुत्र उपश्लोकयितुं एवोपेतोऽस्मि। कदाचिदभिज्ञ एव भवानपि।

पण्डितः—का नाम मे अभिज्ञा ? अहन्तु रुद्राक्षमालाजपपर आसम्। कथ्यतां तावत्।

(प्रविश्य)

जगमोहन :—(सव्यंग्यम्) आश्चर्यकरं पण्डितवर, मालां तु भवान् जपेत् फलं च भवत्पुत्रो लभेत्। ननु वर्धते भवान् सुशीलायाः स्नुषायाः लाभेन।

पण्डित :—अहो किमिदं अभिहितम् सीतारामौ। मम स्नुषा इति। कुतो मे स्नुषा।

जगमोहन :—(सव्यंग्यम्) ननु सत्यम् वदामि। यादृशो भवद्रामः तादृशी एव सीता अपि लब्धा इति फलन्ति भवतां पुण्यानि।

पण्डित :—(सकोपम्) अलमनधिकृतभाषणेन। नो चेत् फलिष्यति ब्राह्मणस्य कोपः। ज्ञातम्।

जगमोहन :—आम् कथं न बुध्येत् भवान्। नाविदितपूर्वा इयं प्रणयकथा। अस्तु। संह्रियताम् कोपः। एषोऽहं गच्छामि। (निष्क्रान्तः)

पण्डित :—(सशोकम् बद्धकरः) दैव, क्व नु पतानि। कस्येदं विदितपूर्वमासीत्यदियं सहशिक्षा अननुभूतपूर्वान् उपद्रवान् जनयिष्यति। इयं च क्षुद्रा पाश्चात्यशिक्षा मम कुटुम्बं सर्वमेव कलंकयिष्यति। कोटिशः यतितं। परं तथापि नासौ बालः संस्कृतं परिशीलयति अन्यथा सर्वमपि सुखोदकं परिणतमभविष्यत्। अस्तु दैव यदपि ते इष्टम्।

॥ पटाक्षेपः ॥

॥ तृतीयदृश्यम् ॥

स्थानम् (निजावासकोष्ठे अष्टादशवर्षीयः विद्यासागरः सचिन्तः तिष्ठति)

विद्यासागरः भगवन् कोऽयं मोहावतारः मम पितृपादानाँ मेधसां, यन्मां संस्कृतं अध्यापयितुं बद्धपरिकरास्ते। कथं मां लम्बतिलकं उष्णीषपत्रधारिणं पण्डितं कामयन्ते। कोऽयं एषां मोहः उपस्थितः अद्य संसारस्य क्वनु उत्कर्षः क्व च एते अवकृष्टमपि स्व आत्मानं न बुध्यन्ते न प्रभवामि एषाम् तत् निजं प्राध्यापकमहोदयमेवाश्रये। स एव एतान् सुपथा प्रवर्तयेत्।

इति गतिं नाट्यतः एव तस्य मित्रं देवकुमारः उपसर्पति पृच्छति च।

देवकुमार :—अंग विद्यासागर, चिरस्य त्वां चिन्ताकुलमेव पश्यामि । न जाने किं त्वामाकुलयति दीनमुख एव तिष्ठसि प्रायेण ।

विद्यासागर :—भ्रातः किं नु वदानि । जन्ममरणयोरन्तराले हि लम्बे । कं नु संकीर्तयानि मानसव्यथां कथाम् ।

देवकुमार :—परमत्र, मित्रेणापि यदि सुखं वा दुःखं वा प्रकटितं न स्यात्, तत् केन अपरेण । जातु अहमेव अस्य प्रतीकाराय अलम् स्याम् ।

विद्यासागर :—अस्तु । तद् वदाम्येव। ननु जानासि एव यत् पितृपादाः संस्कृतस्य पारंगता विद्वांसः राजसभासु च आद्रियन्ते । ते हि संस्कृतैकनिष्ठा मामपि संस्कृतमेवाद्य पाठयितुमिच्छन्ति ।

देवकुमार :—ओः, एतावता एव संतप्यसे । आंगलभाषया सहैव संस्कृतमपि अधीयीत तेन किं अपिच किं न जानासि संस्कृतं तु महाविद्यालयेषु गौणविषयो नाममात्रमेव पाठ्यते इति ।

विद्यासागर :—इदन्तु अहमपि वेद । अस्माकं संस्कृतप्राध्यापकमहोदयस्तु महायोग्यो ऽपि न कदापि अस्मान् पृच्छति परीक्षायां सम्भाव्यान् विशिष्टप्रश्नान् एव च व्याख्याय स प्रदर्शयति । तच्च वयं आंगलभाषायामेव रटित्वा दैवाधीनाः पारयामः परीक्षाः । प्रावेशिकी मैट्रिकं चापि स्मरसि कदाचित् अस्माभिरित्थमेव तीर्णा आसीत् ।

देवकुमार :—तत् किमिदानीं आपतितम् यत् त्वमहोरात्र कंकालशेषतां व्रजसि ।

विद्यासागर :—भ्रातः अविदितोऽसि चिन्ताविषयस्य को नाम विभेति महाविद्यालयीयसंस्कृतपाठशालीया छात्राः अपि महत्तपः तप्त्वा पठन्ति । कुतो नाम अस्मादृशेभ्यः सुखार्थिभ्यः तेषां ता आशाः पल्लविताः कुसुमिताश्च भवेयुः ।

देवकुमार :—तत् त्वां स्वप्रतिमं पण्डितं घटयितुं ते चेष्टन्ते । परं अंग, कथमयं तेषामभिनिवेशः

विद्यासागर :—नायं मामेव उपलक्ष्य तेषामभिनिवेशः परं कमपि संस्कृतप्रचारसंघं संकलय्य न जाने ते कं कं तथैव पाठयितुमिच्छन्ति किंच "चैरिटि बिगिन्ज़ ऐट होम" शुभारम्भो गृहाद्भवेत् । इत्यनुरूपं ते मत्तः एव आरम्भमिच्छन्ति मया चापि निश्चयः कृतः यत्तेषां कार्यम् वा साधयेयम् देहं वा पातयेयम् ।

देवकुमार :—किमुक्तम् एतावता एव देहपाताय उद्युक्तोऽसि । न हि नेदं साम्प्रतम् । कमप्यालम्व्य प्रेरणीयास्ते । आत्महत्या हि कातराणां मार्गः अहं ते सदा सहायः ।

विद्यासागर :—अथैवाहं प्राध्यापकमहोदयमुपसर्पामि । यदि तेषां प्रेरणया ते अनुकूलतां भजन्ते तद् वरं नो चेदत्र तवायं मित्रं शाश्वतिकीं महानिद्रां यास्यति ।

देवकुमार :—न हि भ्रातः मा मैवं वद । प्राध्यापकप्रेरणया ते अवश्यं अनुकूला भविष्यन्ति । उपसर्प तत् तान् । । उभौ निष्क्रान्तौ ।

पटाक्षेपः

## ।। चतुर्थ दृश्यम् ।।

स्थानम् :—पंडित जगदीशभट्टः निजनिवास कोष्ठे चिन्तापरवशः दक्षिणहस्ततलधृतमस्तकः तिष्ठति ।

जगदीशभट्ट :—(सोच्छ्वासम्) हन्त अयमपि नामकालः वीक्षणीय आसीत् । मादृशस्यापि लब्धप्रतिष्ठस्य पण्डितस्य पुत्रः एवं नाम सापवादो भविष्यति इति को नाम मन्यतेस्म । अनया

कदर्यया आंगलशिक्षया यया विनापि जीवननिर्वाहः असम्भवः यया सह चापि युवकः चरित्रहीन एव जायते, इति अपूर्व एव व्यसनपंके पतिता वयम्।।

(मोहनभट्टः प्रविशति)

मोहनभट्ट :—पण्डितप्रवराः कस्यां चिन्तायां मग्ना भवन्तः ? किं तन्नष्टं यदेवं परितप्यते ।

जगदीशभट्ट :—किं नष्टं ? अरे मम अनर्घमाणिक्यं मम पुत्ररत्नं दशरथस्येव रामः वसुदेवस्येव कृष्ण एव प्रणष्टम् । न जाने श्रवणोपमस्य तस्य किं जातम् ।

मोहन भट्ट :—समाश्वसत पण्डिताः समाश्वसत । ज्ञातं मयाऽपि । परं नैकस्य युष्माकम् गृहस्यैव अपितु गृहमात्रस्य एव युवकाः प्रणष्टाः राष्ट्रस्यैव युवकाः प्रणष्टाः। यानाश्रित्य अस्माकं आशालताः प्रचीयन्ते ते एव युवकाः तथा कुत्सितं चेष्टन्ते यत् हृदयं निष्पन्दं जायते। परं नात्र कोऽपि दोषभाक्। अयन्तु आंगलशिक्षाया एव कुप्रभावः।

जगदीश भट्ट :—अहमपि नाम न खलु स्वकीयपुत्राय एव तपामि अपितु राष्ट्रस्य सर्वस्मै अपि युवकजनाय। योऽयं राष्ट्रयुवक अचिरादेव राष्ट्रनौकायाः कर्णधारो भविता स एव अथ प्रथमतः एवंविधेन मन्त्रेण दीक्षणीयः स्यात्—

मातृवत् परदारेषु परद्रव्येषु लोष्ठवत् आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ।।

मोहनभट्ट :—परं साम्प्रतिके युगे इमे स्वप्नाः कथं फलिष्यन्ति। को नाम मन्यते इमां भवदीयां उपयुक्तोक्तिम्। महाविद्यालयानां दीक्षान्तभाषणेऽपि ईदृशमेव उद्घोष्यते परं को नाम प्रभावः तस्य।

जगदीशभट्ट :—ममापि तत्कृतमेव अरण्यरोदनम्। विचारेषु क्रान्ति नहि भाषणाधीना अपितु प्राच्यसाहित्याधीना एव। प्राच्यसाहित्यं चापि प्राच्यतमायामेव भाषायां भवेत् तस्मादयं निष्कर्षः यत् संस्कृतेन ओतप्रोतमेव भारतीयं साहित्यम् निजाध्यात्मबलेन राष्ट्रस्य नवनिर्माणं कर्तुम् क्षमम्।

मोहनभट्ट :—परं साम्प्रतिकशिक्षायां तु अस्य सर्वथाऽभावः। न केवलं भवान् इदं कर्तुमलम्। समाजः शासनं चैव अत्र प्रभवति।

जगदीशभट्ट :—युज्यते तत्। परं शासनमपि अस्माकमेवाद्य। अस्मासु-अपि राष्ट्रकल्याणस्य किमपि उत्तरदायित्वं तिष्ठत्येव। शासनं च अस्माकं विचाराणां एव प्रतिरूपम् यदि च व्यष्टिरात्मानं संस्करोति समष्टिरपि तथैव विपरिणमते।

मोहनभट्ट :—महोदयाः, वयं तु पुत्रवशगा एव जाताः। संसारस्य प्रवाहोऽपि अनुपेक्षणीय एव यदि कोपनः पुत्रः क्षणेनैव आत्मनः किमप्यनिष्टं सम्पादयेत्। तद्वयमवाचः। एवं च दुष्प्रतिकारा एव तिष्ठेम। तत् का नौ गतिः।

जगदीशभट्ट :—(सक्रोधम्) कोऽत्र सन्देहः भवादृशानामेव पितॄणां मोहेन भारतं सार्त्तजातमथ। परं अहन्तु नैकेषामपि एवंविधानां पुत्राणां उत्सादेन मनागपि अश्रूणि प्रवाहयेयम्।

मम तु अस्यां सूक्तौ महती निष्ठा ।———एकश्चन्द्रस्तमो हन्ति नच तारागणोऽपि च ।

एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् सहैव दशभिः पुत्रै भारं वहतिगर्दभी । ननु कथय किं तेन काणेन अक्ष्णा यदपरमपि पीड़यति ।

मोहनभट्ट :— सत्यमाह भवान् । परं कथने करणे च महदन्तरम् । यदापि आपतिष्यति शिरसि-द्रक्ष्यामि कथमित्र समादधति भवान् । पश्यामि यथैव भवान् निजपुत्रं संस्कृतशिक्षया —उद्धरति अवधीयतां कदाचित् पुत्ररत्नादेव अवहीनो न तिष्ठेः ।

जगदीशभट्ट :— पण्डितवर, प्रतीक्ष्यतां केवलं कालः । समयेन प्रदर्शयिष्यामि यदहं पुत्रेषु न पुत्रत्ववशात् अपितु तेषां सद्गुणवशात् एव चिन्तयामि । यस्माच्च क्षणात् पितरः पुत्रेषु गुणवशात् अनुरक्ता भविष्यन्ति तस्मादेव भारतं अनार्तं रामराज्योपेतं च भविष्यति । इत्थमेव च आशासे अहं सर्वेभ्यः । कुपुत्रस्तु म्रियेत् चेत् तेन पित्राप्रसन्नेन भवितव्यम् ।

देवकुमार :—(अन्तर्धाय सर्वंश्रृण्वन् ततश्च सहसा प्रविश्यकथयति)

पण्डितवर, अलं व्याकुलतया । अचिरमेव तवाभीष्ट सम्पत्स्यते । भवादृशा एव आष्टे भग्ने पुनः दैवमनुशोचन्ति ।

मोहनभट्ट :- भाव, अहमप्येतान् पुनःपुनरपि बोधयन् निष्प्रभः जातोऽस्मि । परं इमे महानुभावाः प्राणपणेनापि वचनरक्षकाः न किमपि बुध्यन्ते । अस्तु । आपतितव्यसनं कस्य पूर्वतो ज्ञापकं भवेत् ।

जगदीशभट्ट :—(सव्यंग्यम्) क्षम्यतां महाराज, भवादृशा एव पंडितमन्या अपि पुत्रमोहवशगा युवकानां औद्धत्यं संसारस्य प्रवृत्तिः इति मत्वा प्रोत्साहयन्ति । अज्ञानवशात्तेषां निर्दोषजीवनैः सह क्रीडनकैरिव विनोदमाचरन्ति । भारतस्य भाग्यं च कलंकयन्ति ।

भवादृशा एव राष्ट्रस्य अपकर्षणाय बद्धपरिकराः ।तदलं मम पुत्रस्य च चिन्तया ।

॥ मोहनभट्टः देवकुमारश्च निष्क्रांतः॥

तदैव प्राध्यापकमहोदयः प्रविशति ।

प्राध्यापक :—पण्डितवर, सादरं नमस्कारः । कथ्यतां किमिति अद्य तापेन तप्तो भवान् ।

जगदीशभट् :—एहि स्वागतम् ।नाप्येव कश्चन तापः । भवतां विद्यासागरमेवोपलक्ष्य किंचित्-प्रवृत्तं आसीत् ।

प्राध्यापक :—का सा संकथा अहमपि तदधिकृत्य एव किंचिद् विमष्टुं उपागतः । ननु किं कारणोऽयं भवतां आंगलशिक्षाविषयकः अभिद्रोहः ।

[१९६७ ईशवीयाब्दस्य अक्टूबरमासीये २ दिवसे शिमलानगरस्य

संस्कृतदिवससमारोहस्य सभापतिपदमलङ्कुर्वतां महामहिमशालिनां नृपतिमण्डलमण्डितानां बुशहरभूपालानां, एम० ए० बी० ए०, (आनर्स) आदि विविधविरुदावलिविराजितानां

## संसत्सदस्यानां श्री १०८ वीरभद्र सिंह महाभागानाम्

# अभिनन्दनम्

**अयि दिव्यकुलावतंस !**

अद्य वयं सर्वे तत्र भवतो महामहिमशालिनः समुपस्थित्याः परमं प्रसाद-मनुभवामः। विभिन्नेषु कार्येषु व्यग्रतयापि संस्कृतदिवसमारोहस्याध्यक्ष्यं स्वीकृत्य यद्भवतानुकम्पा विहिता तदर्थं वयं परमां कृतज्ञतां प्रकटयामः। श्रीमति संस्कृतं प्रति या उत्कटा श्रद्धा समादरो च वर्तते तद् वंशपरम्परागत एव। भवतः पितृचरणाः महाभाग्यवन्तः स्व० श्री पद्मसिंहमहीपालाः सकलशास्त्रनिष्णाताः, सनातनधर्मरक्षण सक्षणाः शिक्षासेवापरायणाः समभूवन् इति को नाम न जानाति प्रदेशाभिजनः।

स्व० नृपतिपादाः बुशहरराजधान्यां रामपुरे अशिक्षापूर्णे-आंगल शासन-समये प्रायेण हिमाचलप्रदेशे सर्वप्रथमं निःशुल्कं-उच्चमाध्यमिकविद्यालयं समारभन्त। यस्मिन् विद्यालये शिक्षामधिगत्य अनेके प्रतिभाशालिनश्छात्राः शिक्षाव्ययासामर्थ्यात् राजकीयां शिक्षावृत्तिमासाद्य लवपुरादिस्थानेषु-उच्चशिक्षामवाप्य राज्यशासनसञ्चालने साहाय्यं प्रार्पयन्। हिमाचलराज्यग्रथनानन्तरञ्च उच्चाधिकारे समासीना हिमाचल-प्रशासनसुव्यवस्थां साधुव्यवहारेण सञ्चालयन्ति।

परमहर्षस्यायं विषयो यत् नृपतिशासनसमये बुशहरराज्यं सनातन-राज्यमिति नाम्ना ख्यातमासीत्-राजकीय पत्रव्यवहारे मुद्रायाँ च सनातन-राज्यं बुशहर इत्यङ्कितमासीत्।

स्वर्गीयनृपतिवरेण्याः संस्कृतस्य प्रकाण्डपण्डिता नित्यानुष्ठानपरा आसन्। ते प्रतिदिनं दुर्गासप्तशत्याः पूर्णपाठेन जगदम्बाकृपाप्रसादमधिजग्मुः।

**विद्वद्वरिष्ट !!**

स्वल्पायुषि एव तत्र भवतापि शिक्षा क्षेत्रे या महती प्रशंसनीया च सफलतावाप्ता सा पूर्वतपःप्रभावेण जगदम्बाप्रसादमात्रमेवेति नास्ति सन्देहलेशोऽपि।

ख्याते कालीबाड़ीभवने संस्कृत–दिवस–समारोहावसरे । ]

अनन्तरञ्च षड्विंशतिवर्षवयस्येव प्रथमवारं लोकसभासदस्यतायै स्वकोयान् प्रतिद्वन्द्विनः संख्यातीतैर्मतपत्रैः पराजित्य संसत्सादस्यमलंचकार ।

पुनरस्मिन्नेव वर्षे बहून्–विरोधपक्षीयान्पराजयपथिकान् विधाय संसत्सदस्य-पदमलंकरोति भवान् इति कस्य सहृदयस्य प्रमोदाय न वर्तते ।

**परमोत्साहिन् नवयुवक !!**

लोकसभायां हिमाचलप्रदेशस्य समभ्युदयाय यथाकालं समुपस्थापिता विविधा योजनाः श्रीमतो लोकोपकारत्वं नीतिकुशलत्वञ्च व्यञ्जयन्ति । सर्वेषु कार्यालयेषु राष्ट्रभाषायां सर्वोपि व्यवहारो भवेत्, गोवधस्य कलंकः क्षालितः स्यात्, संस्कृत-शिक्षणं सर्वविधपाठ्यक्रमेषु परमावश्यकं भवेत्, इति त्रिसूत्रसिद्धान्तसमर्थको भवान् न केवलं हिमाचलप्रदेशस्यापितु समस्तभारतराष्ट्रस्य समृद्धये अहर्निशं प्रयत्नमातिष्ठति ।

विदुषां समादरः, व्यसनरहितं सात्विकं जीवनम्, शास्त्रचर्चादयो गुणास्तु स्वाभाविका एव विराजन्ते भवति ।

प्रदेशे संस्कृतस्य सर्वविधा समुन्नति-र्भवेत् तत्र च भवत्सकाशात् परमोत्साहबलं लभेमहि इत्येव प्रार्थ्यते । वयं भवदनुरूपं स्वागतं कर्तुं सर्वथा असमर्थाः तथापि भवतः सौभाग्यपूर्णस्य परमायुष्यसम्पन्नस्य जीवनस्य अभ्युदयाय भगवन्तं भूतभावनं प्रार्थयामः ।

भावत्का एव वयं

**हिमाचलप्रदेशीय—संस्कृतसाहित्यसम्मेलनस्य सदस्याः**

शिमला
२–१०–६७




(श्री शास्त्रि महाभागाः)

# भागीरथ्याश्चपलसलिलं पृच्छति प्राप्य बोल्गाम्



प्राप्याथैवं द्वितीयदिवसं लाल ह्यक्टूबरस्य ।
आधेयं संस्मरणपृथुलं त्वद्दिशोऽन्वेष्टुकामम् ॥
भागीरथ्याश्चपलसलिलं पृच्छति प्राप्य बोल्गाम् ।
शैलेशोऽपि शिशिरमरुतं प्रेषयन्ताशकन्दम् ॥

मोहाच्छन्नाः सजलनयनाः भारतीयाः समन्तात् ।
स्नेहोत्सुक्यात् मुहुरनुदिनं लाल, त्वां संस्मरन्ति ॥
मेघोऽप्येवं सजलनयनः प्रावृषेण्यः प्रवर्षन् ।
आकैलाशात् जलधिवलयं त्वत्कृते रोरुदीति ॥

चेतस्त्वासीत् तव मृदुतरं पङ्कजाच्चापि रम्यम् ।
घोराद् वज्रादपि गुरुतरं दुर्जनेभ्यः कदाचित् ॥
क्षान्तिस्त्वावत् सहजगुरुतासीत् समं शैलराजा ॥
नेतासीस्त्वं सरलकुटिलायाः पथो राजनीतेः ।

संस्काराणामनुकृतिरसि त्वं सदैवादिगान्धेः ।
आशारेखा मुहुरभिमुखासीः सदा निर्धनानाम् ॥
शक्तं नैवं तव गुणकथावर्णनं लालशास्त्रिन् ।
काठिन्यं यत्परमविदुषां किं पुनर्मादृशानाम् ॥

—श्री सच्चिदानन्द काण्डपालः

## समाचाराः

# संस्कृतदिवस–समारोहः

१९६७ ईशवीयाब्दस्य अक्टूबरमासीये २ दिनांके हिमाचलप्रदेशीय–संस्कृतसाहित्य सम्मेलनस्य तत्वावधाने शिमला नगरस्य प्रख्याते काली बाड़ी भवने संस्कृतदिवससमारोहो महता गौरवेण मानितोऽभूत् । अस्य विशालतमस्य समारोहस्याध्यक्षता परममाननीयेन बुशहरराज्याधिपेन भारतीयलोकसभायाः सदस्येन श्री वीरभद्र सिंह महाभागेन सुयोग्यतया विहिता ।



(दक्षिणतः :—श्री जगद्रामशास्त्रिणो वेदमन्त्रोद्घोषं कुर्वाणाः, मञ्चेस्थिता :– सम्मेलनमहामन्त्रिणः केशव शर्माणः सभापतयः श्री राजा वीरभद्र सिंह महाभागाः, सम्मेलनाध्यक्षाः आचार्य श्री दिवाकरदत्त शर्माणः)



प्रायेण द्वि वादनादेव लोकाः भवने प्रवेष्टुमारब्धाः । बालकाः, बालिकाः, युवानः, श्रेष्ठिनः अध्यापकाः, प्राध्यापकाश्च नरा नार्यश्च सर्वेऽपि समारोहेस्मिन् समायताः । मञ्चस्योपरि महात्मनो गान्धिनस्तथा भारतस्य पूर्वप्रधानमन्त्रिणः श्री लाल बहादुर शास्त्रिमहाभागस्य विशालतमे चित्रे सर्वेभ्यः उच्चासने सुप्रतिष्ठिते आस्ताम् । मञ्चस्य उभयतः संस्कृतभाषामहत्त्वविषये श्री लाल बहादुर शास्त्रि महाभागस्य श्री महात्मनो गान्धिनश्च विचारपत्रे सन्निहिते आस्ताम् ।

५ वादनादस्य समारोहस्यारम्भः आसीत् । यदा किल पञ्चवादनार्थं पञ्चकलावशिष्ठा आसन् तदैव मुख्य स्वागतद्वारेण समारोहस्य मुख्यातिथिमहाभागाः प्रविष्टाः । बहूभिः सम्मेलनस्य वरिष्ठसदस्यैः मुख्यातिथिमहाभागानां स्वागतमभिनन्दनञ्च पुष्पहारोपहारपूर्वकं कृतम् । तदैव रूपित्राणि (कैमरा) चित्राकर्षणे संलग्नानि । यथैव सभाध्यक्षाः सम्मेलनाध्यक्षै श्री आचार्य दिवाकरदत्त शर्मा महाभागैः सह मञ्चमारूढाः संस्कृतज्ञेषु संस्कृताभिमानिलोकेषु च कश्चिदपूर्वहर्षातिरेकः समभूत् । समारोहारम्भः वैदिकमन्त्रेण श्री नेहरू संस्कृत महाविद्यालयस्य प्राध्यापकमहाभागेन श्री जगद्राम शास्त्रिणा विहितः । अनन्तरं हिमाचलप्रदेशीयसंस्कृत साहित्य सम्मेलनस्य महामन्त्रिणा दिव्यज्योतिषः सम्पादकेन च श्री केशव शर्मणा महामान्याः राजानो श्री वीरभद्र सिंह महाभागाः सम्मेलनस्य सभापतित्वाय सम्प्रार्थिताः । तदैव दिव्यज्योतिः परिवारस्य बालिकाभिः कु० प्रतिभायाः सहचारित्वे "नयान्तं सुविद्ये ममाज्ञानलेशं मुदाशारदे देहि बोधं विशेषम्" एषा सुप्रसिद्धा संस्कृते सरस्वतीवन्दना सस्वरं गीता । अस्यानन्तरं पूज्यैः श्री आचार्य चरणैः राज्ञां स्वागतं व्याहृतं अभिनन्दनपत्रं च समर्पितम् । संस्कृतभाषायां भाषयद्भिर्मान्यैः श्री आचार्यमहाभागैः शिमलानगरस्य सांस्कृतिककेन्द्ररूपेण व्याख्या कृता । हिमाचल प्रदेशस्य ग्रामीणभाषासु नवतिप्रतिशतसंस्कृतशब्दानामस्तित्वं सोदाहरणं संसाधितम् । एषां

भाषणस्य लोकेषु महीयान् प्रभावः पतितः। अस्यानन्तरं भारतप्रधानमन्त्रिणः हि० प्र० मुख्य-मन्त्रिणः देशस्य प्रख्यातविदुषां शिक्षाविदाञ्च सन्देशवाचनं श्री सुदर्शनचक्र शास्त्रिणा विहितम्।

संस्कृतकविसम्मेलने श्री सच्चिदानन्द काण्डपाल महाभागानां पोर्टमोर राजकीय कन्यामहाविद्यालयस्य संस्कृताध्यापकानां तथा च सोलनस्थस्य श्री तारिणी राजकीय संस्कृत महाविद्यालयस्य प्राध्यापकानां श्री केशवाचार्य महाभागानां कविताः विशेषतः प्रशंसिता लोकैः।

सरस्वती विहारस्य गवेषकैः श्री कैलाशचन्द्र महाभागैः स्वकीयविदेशयात्राया अनुभववर्णनं कृतं तेषु २ देशेषु च संस्कृतभाषामहत्त्वमुपवर्णितम्। जर्मन देशात् समानीतानि विशिष्टलिपिचित्राण्यपि तैर्महाभागैः प्रदर्शितानि। श्री कैलाशचन्द्र महाभागानां भाषणं सर्वैरपि लोकै रतितरां प्रशंसितम्। सभापतेः भाषणानन्तरं मञ्चस्थैः सभ्यै रवतरणं कृतम्।

साहित्यिककार्यक्रमानन्तरं सांस्कृतिककार्यारम्भः जातः। कु० शारदा कु० स्नेहलता च संस्कृतनृत्य गीतिकां साभिनयं चारुतया च प्रदर्शितवत्यौ। पोर्टमोर राजकीय कन्या विद्यालयस्यैव बालाभिः संस्कृतनाटिकाभिनीता। अत्र कु० सुमन, प्रमोद, निर्मल, सुदर्शन कमलेश उर्मिलादिभिः भागो गृहीतः। श्री काले कलामन्दिरस्य शिष्यैरपि संस्कृतगीतवाद्यादिकार्यक्रमः सुतरां प्रदर्शितः।

सम्मेलनमहामन्त्रिणा चान्ते सर्वेषां धन्यवादं कुर्वता कथितं यत् स्वतन्त्र भारतस्य वर्तमानाऽवश्यकता इयमेव वर्तते यद्वयं संस्कृतस्य महत्त्वं स्वीकुर्मः। संस्कृतं हि भारतीयसंस्कृतेः ज्ञानस्य, विज्ञानस्य, शिक्षायाः राजनीतेः धर्मस्यार्थस्य च मूलभूतम्। अतोऽस्य प्रचारप्रसार-कर्मणि नवयुवकै र्देशस्याग्रे समागत्य देशस्य समुचितनेतृत्वं कुर्वद्भिः स्वजीवनं यापनीयम्। देशस्य नवनिर्माणं संस्कृतं विना खपुष्पायितमेव।

सभापतिमहाभागैरन्ते विशिष्टाभिनेतृभ्यः पुरस्कारप्रदानमपि कृतम्।

सम्मेलनस्यास्य विशेषता इयमासीद्यत् लोकाः शीतमविगणयन्तः होराचतुष्टयी पर्यन्तं एकासनेनोपविष्टाः कार्यक्रमस्यास्वादनं सानन्दं चक्रुः।



(संस्कृतनृत्यपरे कु० शारदास्नेहलते)



# काव्य कुञ्जात्

★★★

धारावाहि नवकाव्यम्

## "वीरभूमिः"

पूर्व कथा

उदयगिरि-शृंगाग्रमारूढ़े भगवति दिनमणौ प्रोषितभर्तृका वायसी भास्कर-हेम-किरण स्नातं किमप्येकं कृष्णचिन्हं नयनपथगमकरोत्। भर्तासौ समायाति कोऽप्यन्यो वेति विमर्शपरायणा सा अवधानेन क्रमशः विशालीभवन्तं तच्चिन्हं चिरं निरैक्षिष्ट पर्यचिनोच्च शाखिशाखावसक्त-चरणं प्रेयांसम्। मानावलीढ़हृदया सा तद् विमुखी-भूता मौनमस्थात्।

तया विदूरागतकान्तसन्निधौ, न भाषितं नैव विलोकितं पुरः ।
रतिप्रसङ्गे नवमानदीपिता, सदा प्रकृत्या भवति प्रियाङ्गना ॥१॥

ततस्तु काकेन यदा प्रदर्शिताः, स्वकण्ठगा धान्यकणा उपाहृताः ।
शनैः शनै वीजयता तदा हि सा, निरुद्धवाष्पा निजगाद केवलम् ॥२॥

"निपात्य मां तीव्रमगाधसागरे, वियोगवातोग्र-तरंगगर्जिते ।
भृशं वियुक्ताहमपुण्यदर्शना, त्वया वराकी तु कथं न हिंसिता ॥३॥

विहाय मामित्थमनीतिवर्त्मना, ह्यितः परं त्वं न गमिष्यसीति चेद् ।
वचोऽविकारि प्रददासि निर्मलं, तदैव यास्यामि न नीडमन्यथा ॥४॥

कियानहो ! भीषणशोकवाहको, निशीथकालः स्थिरवेदनाभरः ।
सवेग—चीत्कारविबोधिता नवा, श्रुता मया यत्र घना मनोव्यथा ॥५॥

प्रियामुखात्प्राप्य वृतान्तमीदृशं, शरीरयष्टिप्रविभेदकं खरम् ।
सुदीर्घमार्गश्रमसीकरातुरो, बभूव काकः सहसाकुलाश्रुमान् ॥६॥

प्रवृद्धमानो नववेगचंचलः, प्रियस्य सान्निध्यमवाप्य वेदनां ।
अभूतपूर्वा नयतीह कामपि, निरुद्धभावो वदतीव तां भृशम् ॥७॥

सहस्रनाडीघटिते कलेवरे, कदापि झंझा वहतीदृशी भुवि ।
रहस्यलीना हृदयस्य वेदना, बहिर्मुखी चक्षुपथाद्धि जायते ॥८॥

करुणाचलितः स वायसः परया धीरतयाधरीकृतः ।
वचनं किमपीह नाशकद्, गदितुं गाढमनो व्यघारयम् ॥९॥

विहगव्यसनाभिसंहता, खगपत्नी प्रययौ स्वमन्दिरम् ।
प्रियभाववितर्कनेऽङ्गना, मृदुभावा हि सदैव जायते ॥१०॥

❋ (पंचमे सर्गे) ❋

"अरुणः"

# संस्कृत दिवस समारोह के अवसर पर

सभापति

## राजा श्री वीरभद्र सिंह संसदसदस्य का

# अध्यक्षीय भाषण





श्री आचार्य जी, संस्कृतविद्वन्मंडल एवं संस्कृतानुरागी सज्जनवृन्द तथा प्यारे विद्यार्थियो ।

आप लोगों ने अपने स्वाभाविक स्नेह द्वारा इस विद्वानों की सभा में सभापति पद के आसन पर जो मुझे आसीन किया है उसके लिए मैं आप लोगों का किन शब्दों में धन्यवाद करूं यह मैं ठीक ठीक नहीं जानता । मेरा यह कथन केवल उपचार मात्र नहीं है बल्कि बिलकुल सच्चा है । अनेक संस्कृत के धुरन्धर महामान्य विद्वानों के होते हुए भी आप लोगों ने जो मुझ जैसे संस्कृत ज्ञान से शून्य को अपनी कृपा का भाजन बनाया है इस विषय में आप लोगों का मेरे प्रति निसर्ग स्नेह या श्रद्धा ही कारण है, इसमें सन्देह नहीं जैसा कि श्री आचार्य जी ने अपने अभिनन्दन के शब्दों में स्व० पूज्य महाराज के सम्बन्ध में कुछ कहा है वह बिलकुल तथ्य है। हम लोगों में तो उसका कणमात्र भी नहीं है किन्तु परम्परागत निष्ठा अवश्य है । आजकल हमारे देश में कुछ ऐसा वातावरण है कि जिसके परिणाम-स्वरूप हम विश्वभाषा संस्कृत और भारतीय संस्कृति से प्रायः अपरिचित ही रह जाते हैं। फिर भी मुझे समय समय पर संस्कृत के विद्वानों और विशेषतः श्री आचार्य जी के सम्पर्क से संस्कृत भाषा की सरलता, माधुर्य और महत्ता ने निः-सन्देह आकृष्ट और प्रभावित किया है । विद्वानों को संस्कृत को और भी सरलतम बनाने के लिए प्रयास करना चाहिए ।

आज का दिन हमारे देश के लिए गौरव का दिन है । आज राष्ट्रपिता महात्मा गांधी और देश के पूर्व प्रधान मन्त्री श्री लाल बहादुर शास्त्री का जन्म दिवस है जिनका चित्र और चरित्र संस्कृत-मय था ।

हिमाचल प्रदेशीय संस्कृत साहित्य सम्मेलन के संस्कृत दिवस समारोह के इस अवसर पर हिमाचल प्रदेश एवं भारत के विभिन्न स्थानों से आए हुए सब विद्वानों और शिक्षा-शास्त्रियों का आज के सम्मेलन के सभापति के रूप में स्वागत करते हुए मुझे बड़ी प्रसन्नता का अनुभव हो रहा है । विद्वानों के महत्वपूर्ण प्रवचनों के पश्चात् मेरे लिए कुछ कहना शेष नहीं रह जाता । संस्कृत के ज्ञान के बिना हमारी संस्कृति, प्रादे-शिक भावनाएं, विज्ञान, कलायें, इतिहास आदि का वास्तविक ज्ञान अपूर्ण है । जहां तक मेरा विचार है यदि स्वाधीनता प्राप्त होते ही संस्कृत को उसका प्राचीन सम्मान देकर सभी पाठ्यक्रमों में उसकी अनिवार्य शिक्षा की व्यवस्था की जाती तो आज अनेक प्रकार के भाषाविवाद तथा भारत की अखण्डता के लिए भय और भ्रष्टाचार का ताण्डव नृत्य न होता । मैं नहीं समझता कि संस्कृत में ऐसा क्या तत्व है, अध्ययनमात्र से ही जो मनुष्य को अनुशासन और पवित्र जीवन की आन्तरिक प्रेरणा देता है और भ्रष्टाचार से दूर रखता है। विद्यार्थियों में प्रतिदिन बढ़ती हुई अनु-शासन हीनता को समाप्त करने का यह एक

सरल उपाय है कि संस्कृत को सभी पाठ्यक्रमों में तुरन्त अनिवार्य किया जाये । इस ओर सरकार और जनता का ध्यान तुरन्त जाना चाहिए यदि भारत की महानता और पवित्रता की रक्षा करनी है।

स्वर्गीय लोक प्रियनेता श्री जवाहर लाल लाल नेहरू को भी संस्कृत से प्रेम था और उसकी महत्ता ने उनको अपनी ओर खींचा। वे इसे भारत की सभ्यता और संस्कृति का मूल मानते थे। आज मुझे उन के वे शब्द याद आ रहे हैं :-

"भारत के इतिहास में संस्कृत का जो हाथ रहा है, वह दुनियां में किसी भी भाषा का किसी भी कौम के इतिहास में नहीं रहा। संस्कृत में न सिर्फ ऊंचे से ऊंचे विचार और सुन्दर से सुन्दर साहित्य रचा गया है बल्कि कई एक छोटे छोटे राज्यों में बटे हुए उस भारत को एकता की लड़ी में बांधे रखने का काम भी संस्कृत ने किया । रामायण और महाभारत हज़ारों वर्षों से भारत की हर पीढ़ी के करोड़ों लोगों की जिन्दगियों का तानाबाना बने हुए हैं। मैं अक्सर यह सोच कर हैरान रह जाता हूँ कि हमारी जाति कहीं बुद्ध, महाभारत, रामायण, गीता उपदेशों को भूल जायें तो उसका क्या हशर होगा? हमारी जड़ें उखड़ जायेंगी, हम उन सारी बुनियादी खूबियों को खो देंगे, जो युगों से हमारे साथ चली आ रही हैं और जिन के कारण दुनिया में हमारी हैसियत बची हुई है । तब भारत भारत नहीं रह सकेगा।"

श्री जवाहर लाल नेहरू जी का यह उदाहरण इस देश के साथ संस्कृत के गहरे सम्बन्ध को बताने के लिए काफी है, न केवल हमारे देश में, परन्तु सारे संसार में संस्कृत ने अपना महत्वपूर्ण स्थान बनाया है। अनेक विदेशी विद्वानों ने भारत में आकर संस्कृत की शिक्षा का अध्ययन किया। आज भी जर्मन अमेरिका, नेपाल, अफगानिस्तान, फ्रांस, इटली इंगलैंड, ईरान आदि देशों में संस्कृत की शिक्षा के लिये विशेष व्यवस्था है और अन्तर राष्ट्रीय स्तर पर संस्कृत का काम हो रहा है। इस देश ने संस्कृत को जन्म दिया है, इसलिये हमारा यह विशेष कर्तव्य है कि हम इस भाषा की उन्नति, प्रसार और प्रचार तथा विकास के लिये अधिकाधिक कार्य और व्यवस्था अपने देश में एवं विशेषतः हिमाचल प्रदेश में करें।

यहां न केवल संस्कृत के अध्ययन को व्यवस्था भारतवासियों के लिए या हिमाचल प्रदेश वासियों के लिए हो आवश्यक है अपितु विदेशों से भी लोग इस सुन्दर नगर में संस्कृत के अध्ययन के लिए सहर्ष आयेंगे।

शिमला शीघ्र ही पर्यटन का केन्द्र बनने जा रहा है। वैसे भी यहां प्रतिवर्ष सहस्रों यात्री आते हैं। हिमाचल की राजधानी बनने का गौरव इसे प्राप्त हो ही चुका है । अतः सम्मेलन के महामन्त्री ने जैसा सम्मेलन की योजनाओं का परिचय प्रस्तुत करते हुए कहा है वह बहुत ही महत्वपूर्ण है। हिमाचल प्रदेश की भ षाओं में प्रायः नव्वे प्रतिशत शब्द संस्कृत के हैं । अतः इस प्रदेश में संस्कृत के अनुसंधान की सुव्यवस्था भी होनी चाहिए। तथ्य बात तो यह है कि संस्कृत विश्व भाषा है और संस्कृत साहित्य विश्व साहित्य है। अतः प्रादेशिक सरकार को सम्मेलन के 'संस्कृत विद्या पीठ' सम्बन्धी प्रस्ताव को यथाशीघ्र कार्य रूप में परिणत कर देना चाहिए। संस्कृत के अध्यापकों को समुचित वेतन स्तर प्रदान करना सरकार का नैतिक कर्तव्य है क्योंकि अभी तक निरन्तर उनकी उपेक्षा होती आ रही है।

अब समय आ गया है जब हमें अपने देश के गौरव को ठीक तरह से समझ लेना चाहिए। और देश को गौरव प्रदान करने वाले जो भी तत्व हमारे देश में हैं उन्हें पुष्ट किया जाना चाहिए। अभी स्वतन्त्र हुए तो हमें २० वर्ष ही बीते हैं।

हमारा इतिहास लाखों वर्षो का इतिहास है। उसके बिना आज के हजारों वर्षो की प्रगति भी निष्प्राण और व्यर्थ है। हमें नवीन और प्राचीन को समन्वित कर चलना है परन्तु ऐसा लगता है कि आज नवीनता और अन्धानुकरण की ओर हम अधिक अग्रसर हो रहे हैं। और अपने जो वास्तविक जीवनीय तत्व हैं उस ओर हमारा तनिक भी ध्यान नहीं। अतः देश के नवयुवक वर्ग को जिसके ऊपर भारत के प्रशासन का पूर्ण उत्तरदायित्व है - भारतीय संस्कृति की प्राण भूत संस्कृत भाषा के महत्व को समझना है और उसे सब प्रकार से विकसित करना है। प्रदेश में संस्कृत को द्वितीय भाषा घोषित करना एक महान् निर्माणात्मक कार्य होगा।

मुझे यह जान कर प्रसन्नता हुई कि अ० भा० संस्कृत साहित्य सम्मेलन गत आधी शताब्दी से संस्कृत के प्रसार और प्रचार के लिए प्रयत्न कर रहा है। इसने विदेशी साम्राज्य की कठिनाइयों के समय भी संस्कृत के हितों की रक्षा की। इतने लम्बे समय तक इस संस्था का आज भी सजीव रहना भारतीय जनता में इसके प्रति विश्वास का प्रत्यक्ष प्रमाण है। इस समारोह से सम्मेलन के माध्यम से प्रदेश में नये दिन की शुरूआत हो रही है और मेरा विश्वास है कि आप सब लोगों के सहयोग से यह प्रादेशिक सम्मेलन संस्कृत के सम्बन्ध में जो कार्य कर रहा है वह सर्वथा उचित और आवश्यक है। भारत की सांस्कृतिक ज्योति को जलाए रखने के लिए संस्कृत भाषा को समृद्ध बनाना है। विद्वानों की यह उक्ति सत्य ही है कि (संस्कृतिः संस्कृताश्रिता) अर्थात् भारतीय संस्कृति संस्कृत की मूल भित्ति पर खड़ी है हमें शानदार बीते युग का वर्तमान स्थितियों के अनुसार भविष्य के लिए भी संकलन करना है। मेरा विश्वास है कि संस्कृत साहित्य सम्मेलन इस ओर जागरूकता से प्रयास करता रहेगा। इस कार्य के लिए मेरी शुभ कामनायें आप के साथ हैं।

धन्यवाद।

---

# हिमवान् शास्ति वृहद्धिमाचलम्

श्री पद्मनाभ जोशी

हरिताम्बरवेषभूषितः सितगान्धीयशिरपूछदीं दधन् ।
जलदो जनसेवकोऽधुना हिमवान् - शास्ति वृहद्धिमाचलम् ॥

अश्वत्थैः सुरदारुभिश्च सरलै विल्वैर्वटैर्वेणुभिः ।
पीताक्षैः स्थलपद्मपाटलभरैरिन्दीवरैः केसरैः ॥

आचन्द्रा यमुनावधी रजतवत्-विद्युद्युतै र्वारिभिः ।
देवास्त्वामभिषेचयन्ति शतधा यातं महाकारताम् ॥

तेषां स्वागतगानमेव निनदः पञ्चापगानां कलैः ।
रुरुवै र्हस्तिमृगेन्द्रव्याघ्रजनितैः सारंगगीतै र्मुहुः ॥

कूजत्कोकिलवर्हिचक्रचटकैर्गुञ्जद्द्विरेफै र्भृशम् ।
मन्ये त्वामभिनन्दयद्भिरधुना जेगीयते कोरसः ॥



(कवितापाठं कुर्वन्तः श्री जोशीमहाभागाः)

❀ ❀

# सत्यवार्ता:

## शिमलायां सम्मेलनस्य निर्वाचनाधिवेशनम्

२२.१०.६७ तिथौ रामपुर बुशहर नृपतीनां श्री वीर भद्र सिंह महाभागानां संसत्सदस्यानां राजभवने हिमाचलप्रदेशीयसंस्कृतसाहित्यसम्मेलनस्याधिवेशनं निर्वाचनं च प्रदेशस्य शिक्षामन्त्रिणः श्री रामलाल महाभागस्य सभापतित्वेऽजनि। अस्मिन्नवसरे स्वीयेऽध्यक्षीयभाषणे शिक्षामन्त्रिणा कथितं यत् सम्मेलनेन प्रदेशे महत्त्वपूर्णं कार्यं क्रियते। प्रदेशसर्वकारः प्रथममेवात्र विषये जागरूकः। भविष्येऽपि सम्मेलनयोजनाकृते यथासम्भवं सहयोगदानं भविष्यति। नेदं विस्मर्तुं शक्यते यत् संस्कृतमेव भारतीयसंस्कृतेः मूलम्। अत्र भाषमाणेन राजा श्री वीर भद्रसिंह महाभागेन कथितं यत् भारतस्य जनेषु आंग्लभाषाध्यापनेन नैव भारतीयता समायास्यति संस्कृताध्यापनेनैवेदं सर्वं भवितुमर्हति। सम्मेलनाध्यक्षैः दिव्यज्योतिषः संस्थापकमहाभागैः श्री आचार्यचरणैर्भाषितं यदहं प्रदेशस्यास्य शिक्षाक्षेत्रे गतपञ्चविंशतिवर्षेभ्योऽविरतं कार्यमकुर्वम्। इदानीं ममायमेवाभिलाषोऽस्ति यदस्य प्रदेशस्य आबालवृद्धनरनारीषु सर्वेषु अपि संस्कृतप्रसारो भवेत् तेन च सुसंगठितोऽयं देशः पूर्ववत् गौरवान्वितो विश्वगुरु भवेत्।

अस्मिन्नवसरे प्रदेशस्य विशिष्टशिक्षाशास्त्रिणः, संस्कृतानुरागिणः, संस्कृताध्यापकाश्च पर्याप्तमात्रायामायाताः। सम्मेलनपदाधिकारिणः निम्नाङ्कितरूपेण निर्वाचिताः बभूवुः।

संरक्षकाः

(१) श्री १०८ महन्त सुग्रीवानन्द महाभागाः वेदान्ताचार्याः, विद्यालंकाराः।

(२) श्री १०८ महन्त लालदास महोदयाः, (३) श्री १०८ राजर्षि दुर्गासिंह महोदयाः बघाटराज्याधिपतयः।

(१) सभापतिः—राजा श्री वीरभद्रसिंह महाभागः, एम० ए० बी० ए० (आनर्सः) संसत्सदस्यः २) कार्यवाहकसभापति :—आचार्य श्री दिवाकर दत्त महाभागाः (३) उपसभापतयः—राजा राणा श्री योगीन्द्रचन्द्रः, जुब्बलनरेशः, राणा श्री जगदीश शम्शेरः मशोबरा, कर्नल श्री बलदेव सिंह पठानिया, श्री पं० हरदेव शर्माणः विश्वविजयपञ्चाङ्गाध्यक्षाः ज्योतिष्मती-सम्पादकाश्च श्री ठाकुर सेन नेगी महाभागाः, हि० प्र० संयुक्तविपक्षदलाध्यक्षः, प्रदेशस्य पूर्वमुख्यसचिवः। श्री रामसिंहासन त्रिपाठी महाभागाः, श्री शिवशरण सिंह ठाकुरः, दूरदृश्यनिदेशकः (४) महामन्त्री प्रो० श्री केशव शर्मा, दिव्यज्योतिषः सम्पादकः ५) संयुक्तमन्त्री श्री सच्चिदानन्द काण्डपालः, व्याकरणाचार्यः, बी० ए०। सहायकमन्त्री (६) श्री सुदर्शन चक्रः, शास्त्री, एम० ए० साहित्यरत्नम् (७) संगठन मन्त्री श्री केशव रामः दर्शनाचार्यः, (८) प्रचारमन्त्री प्रो० श्री सतीश चन्द्र महाजनः, एम० ए०:, (९) सूचना मन्त्री श्री स्वरूपनारायणः, एम० ए०, १० कोषाध्यक्ष :— श्री अयोध्या प्रसाद जैनः।

अस्यातिरिक्तं कार्यकारिण्याः सदस्या अपि निर्वाचिताः बभूवुः। नवनिर्वाचनानन्तरं निम्नाङ्किताः प्रस्तावाः सर्वसम्मतयाः पारिताः बभुवुः।

१—हिमाचलप्रदेशसर्वकारोऽविलम्ब संस्कृतस्यानिवार्यशिक्षणं समुद्घोषयेत् । २ संस्कृतज्ञानस्य संजीवनाय राजधान्यां हिमाचलसर्वकारः विद्यापीठसञ्चालनं कुर्याद्यत्रायुर्वेद ज्योतिषाध्ययनं गवेषणञ्च वैशिष्ट्येन भवेत् । ३ प्रदेशसर्वकारः यथाशीघ्रं संस्कृतविद्यालयानां वर्गीकरणं कुर्यात् तेषु च केन्द्रीयसंस्कृतमण्डलनिर्मितं पाठ्यक्रमं सञ्चालयेत् । ४ शिमलानगरे १९६८ ईशवीयवत्सरे प्रान्तीयसंस्कृतसाहित्यसम्मेलनमहाधिवेशनं भवेत् । तदुद्घाटनार्थं सम्पन्नतायै च राष्ट्रपतिमहाभागः, प्रधानमन्त्री, उपप्रधानमन्त्री चैते समामन्त्रिताःस्युः । ५ १९६८ ईशवीयाब्दीयः संस्कृतदिवससमारोहः किन्नरमण्डलस्य कल्पास्थाने समायोजितो भवेत् : ६ सम्मेलनस्य धनं धनागारे संस्थापितं स्यात्तत्र च तदुपयोगाधिकारः अध्यक्षाय, कार्यवाहकाध्यक्षाय, महामन्त्रिणे च प्रदत्तः ।

अस्यातिरिक्तं महामन्त्रिणान्तरिमायव्ययपत्रकं संस्थापितम् । यत्र ६४/५० मिताया अर्थराशे र्न्यूनतासीत् सा चाध्यक्षमहाभागैः श्री आचार्यचरणै र्व्यक्तिगतरूपेण प्रपूरिता । अत्रेदमपि स्मरणीयमिति महामन्त्रिणा कथितं यत् श्री आचार्य दिवाकरदत्तशर्मभिः अस्यातिरिक्तं १९६१ ईशवीयाब्दतः १९६६ वर्षान्तं २५००/– सार्धद्वयसहस्त्रमितं धनं स्वपार्श्वात् सम्मेलनस्य सञ्चालनार्थं व्ययी कृतम् । न कस्मादपि सदस्यताशुल्कमन्यथा वा दानादिकमपि गृहीतम् । इदं धनं न केवलं श्री आचार्यमहाभागानां सकाशात् दानमेवापितु प्रदेशीयसम्मेलनमिदं श्री आचार्यचरणैः स्वरक्तविन्दुभिः परिपोषितमिति न कोऽपि देशाभिजनो विस्मर्तुं शक्नोति ।

अनन्तरं महाधिवेशनार्थं ३००००/- सहस्रमितस्य धनस्याथ च सम्मेलनार्थं १००००/- दशसहस्रमितस्य धनस्य अनुमानितं आयव्ययपत्रकमपि महामन्त्रिणाधिवेशने संस्थापितं स्वीकृतिश्च तस्य गृहीता ।

अन्ते सर्वेभ्योऽपि सदस्येभ्यः श्री राज्ञो श्री वीरभद्रसिंहमहाभागानां सकाशात् समिष्टान्नं उष्णपत्रिकापानमप्यभूत् ।

अस्याधिवेशनस्य साफल्यार्थं श्री वीरभद्रसिंहमहाभागैः लोकसभासदस्यैर्या हि सहायता प्रदत्ता तदर्थं संस्कृतसमाजस्तेषां नितान्तं कृतज्ञः । शिक्षामन्त्रीमहाभागेन, जुब्बलनरेशेन श्री योगिन्द्र-चन्द्र महोदयेन च यदस्माकंमातिथ्यं स्वीकृतं तदर्थं तेषामपि वयं भृशं कृतज्ञाः सर्वे संस्कृताभिमानिनः ।

---

## अ० भा० संस्कृतसाहित्यसम्मेलनम्

भारतस्य प्रबलतमस्याखिलभारतीयसंस्कृतसाहित्यसम्मेलननाम्नः संगठनस्य वयं सर्वे संस्कृतज्ञाः समनुग्रहीता येन संस्कृतमण्डल्-श्री लालबहादुरशास्त्रि-राष्ट्रिय संस्कृतविद्यापीठादि निर्माणाय देशे वातावरणः समुत्पादितः । अत्र सम्मेलन महामन्त्रिणः

### डा० श्रीमण्डनमिश्रमहाभागाः

सर्वथा सर्वेषां संस्कृतज्ञानां भारतीयसंस्कृतिप्रेमिणाञ्च धन्यावादार्हा येषां सद्द्योगेनैव सम्मेलनं प्राणवदस्ति ।

# इन्द्रप्रस्थे संस्कृतदिवस-समारोह :

आषाढ़ शु० १५ गुरुपूर्णिमा २१/७/६७

सर्वप्रथमं श्री मोरार जी देसाई महोदयस्य (भारतीयउपप्रधानमंत्रिणः) सभायां उपस्थित्यनन्तरं वेदपाठपूर्वकं म० म० श्री छज्जूराम शास्त्रिणा, पुष्पमालया स्वागतम् कृतम्। तदनु महाराष्ट्रस्य अष्टवेदपाठिद्वारा मंगलाचरणं जातम् । मण्डलस्योपमंत्री श्रीजीवनराम शास्त्रिणा संस्कृतदिवसाभिनन्दनम् पठितम् । भारतप्रसिद्धदैवज्ञशिरोमणि श्री हरदेव शर्मा त्रिवेदिना स्वीयं मुद्रितं स्वागतभाषणं पठितं अथ च श्री मोरार जी महोदयाय अध्यक्षासन ग्रहणाय प्रार्थना कृता । म० म० श्री छज्जूराम विद्यासागरेण मण्डलपरिचयो दत्तः। मण्डलस्य गतिविधिः प्रदर्शितः अथ च कथितं यत् विंशति वर्षेषु अनुसन्धानकार्यस्य ईदृशी सफलता दत्ता यत् नवीनानां एकादश ग्रन्थानां निर्माणप्रकाशनञ्च कारितम्।

आर्यसमाजस्य प्रधानः श्री रामगोपाल शाल वाले तथा राय बहादुर सेठ श्री गूजरमल मोदी महोदयाय धन्यवादः कृतः। यत्ताभ्यामस्योत्सवस्य सम्पूर्णो व्ययभारः गृहीतः।

पुनः प्रतिवर्षवत् मण्डलद्वारा श्री मोरार जी महोदयः (देश रत्नम्) श्री वेणीराम गौडः (वेदवाचस्पतिः) श्री दीनानाथ शास्त्री तथा शिवकुमार शास्त्री 'विद्यावाचस्पति' रामशरण शास्त्री (साहित्यवा०) श्री भगवान्दास (आयुर्वेदमार्तण्ड) श्री हंसराज कपिलः (दैवज्ञशिरोमणिः) श्री प्रेमचन्द गुप्तः (धर्म भूषण) पदवीभिः सम्मानिताः।

गो० डा० गिरधारी लाल शास्त्री, भीमसेन शास्त्री श्री मती लीला राव बम्बई, स्वर्णपदकैः सम्मानिताः । अनन्तरं श्री मोरार जी महोदयेन अध्यक्षपदात् भाषणं कुर्वता संस्कृतस्य प्रचार-प्रसारयोरावश्यकता कथिता ।



(अ० भ० सं० प्र० मण्डलस्य संस्थापकाः
म० म० श्री छज्जूराम विद्यासागराः)

प्रस्तावक श्री रामचन्द्र भारती महोदयेन कथितं अद्य भारतवर्षे सर्वाधिकः कर्मकाण्डस्य लोपः भवितुमारब्धः अतः भारतस्य प्रत्येक केन्द्र स्थानेषु कर्मकाण्डस्य शिक्षादानाय कर्मकाण्ड-विद्यालयाः स्थापनीयाः। अस्यानुमोदनं गो० डा० गिरधारीलालेन समर्थनञ्च आचार्य प्रभाकर मिश्रेण कृतम्।

संसत्सदस्यः श्री रामगोपाल शाल वाले डा० कृष्णदत्त भारद्वाजः, वामदेव शास्त्री, उग्रसेन शास्त्री, पूर्णचन्द्र राजज्योतिषी प्रभतीनां भाषणं जातम्। मण्डलस्य प्रधानमंत्री श्रीरामचन्द्र भारती द्वारा धन्यवाददानानन्तरं शान्ति-पाठपूर्वकं सभासमापनं जातम्।

# सम्पादकीयम्

## नववर्षारम्भेऽतीतचिन्तनम्

संस्कृतजगतः सर्वातिप्रियं मासिकं दिव्यज्योतिः संस्कृतदिवससमारोहविशेषाङ्केनानेन सह स्वजीवनस्य द्वादशतमे वर्षे प्रवेशं करोति । अथ नववर्षारम्भकालेऽस्मिन् दिव्यज्योतिषः प्रधान सम्पादकत्वेनाहं पत्रस्यास्य कृपालु-लेखकानां, सहृदयपाठकानां, उदारसंरक्षकाणामन्येषां च भारते-ऽथवाऽन्यदेशेषु विद्यमानानां शुभचिन्तकानामतितरां धन्यवादं करोमि येषां पावनसहयोगेन पत्रस्यास्य सञ्चालनं भवति । दिव्यज्योतिषः गतैकादशवर्षाणि नितान्तं संघर्षपूर्णानि । स्वातन्त्र्याद-नन्तरं देशस्य शिक्षापद्धतिविषये इदानीं यावदपि वयं गाढान्धकारे निमग्नाः स्मः । अनेकेषां आयोगानां संस्थापना सञ्जाता परं न कापि शोभना शिक्षापद्धतिरिदानीं यावदपि स्थिरी भूता यथा भारतीयभाषाणां सम्यक् तयात्र प्रसारः प्रचारश्च स्यात् । संस्कृतभाषा याहि न केवलं भारतीय-भाषाणामपितु विश्वभाषाणां जननी जीवनीयतत्वभूता च-चरमोपेक्षां प्राप्तवती स्वातन्त्र्यादनन्तरम् । अत्र केन्द्रीयसर्वकारेण तु शोभनः प्रयासश्चेत् न विहितोऽभविष्यत् संस्कृतप्रसारप्रचारक्षेत्रेषु तदा महती हानिरस्या अभविष्यत । पर प्रान्तीयसर्वकारैरत्र महती उपेक्षा प्रदर्शिता आंग्लशिक्षा-प्रभावेण मेकालेमहाशयस्य स्वप्नोऽद्यात्र भारते सत्यतां गतः । इदानीन्तना भारतीयाः लिपिभाषा-ज्ञान—विज्ञान—दर्शन—चिकित्सा—ज्योतिष—खगोलभूगोलादिसम्बद्ध यत्किमपि विद्याजातं वर्तते तत्पश्चिमस्यैव कृपाकटाक्षं मन्यन्ते । अनेनैव श्रीमन्तः ज्ञातुं शक्नुवन्ति यत् कियत्कठिनमस्ति संस्कृतभाषापत्रप्रकाशनम् । तथापीदं पत्रं प्रचलति एतादृशेऽपि काले यदा लोकानामुदरभरणकार्यमपि दुष्करं जातम् । अतोऽत्र नूनमेवाहं दृढविश्वासेन कथयितुं शक्नोमि यत्कापि दैवीशक्ति हि मातुः पत्रस्यास्य सञ्चालनं करोति नाहं सीमितशक्तिरकिञ्चनः ।

दिव्यज्योतिषो नववर्षस्य स्वर्णिमसुप्रभाते सर्वेषामपि दिव्यज्योतिः सम्बद्धानां कृते सर्वमपि कल्याणमयं भवत्विति तदर्थं भवानीं प्रार्थये । पत्रस्यास्य सम्पादकीयेन प्रतिमासं प्रसुप्तसंस्कृ-तसमाजस्य जागरणायानवरतप्रयासाः विहिताः । नैकमपि सम्पादकीयं प्रखरासिधारातीव्रतारोहित तीक्ष्णतमविचाराग्निज्वालाबलीढताहीनं वा भवतीति संस्कृतसमाजः स्वयं जानाति । अस्मासु दीर्घसूत्रता त्वतितरामेवास्ति । अत एव वयं संस्कृतपत्रसम्पादकानामुचितोत्साहप्रवर्धनं शुभचिन्तनं वा कर्तुं न प्रभवामः । अस्मिन् क्षेत्रे वयं ईर्ष्याद्वेषपङ्कगलिताः किंकर्तव्यविमूढा वा । इदमेवास्ति प्रधानकारणं यत्स्वतन्त्रतायामपि वयं भृशं परतन्त्रा एव ।

अस्य पत्रस्य माध्यमेन कुरुक्षेत्रविश्वविद्यालयभूमिकानिर्माणं, पञ्चाम्बुविश्वविद्यालयेन शास्त्रिणां कृते मतदानाधिकारप्रदानं, केन्द्राय सर्वकारेण च संस्कृतसमुन्नत्यर्थं विविधयोजनासञ्चालनमिति केचन मौलिकप्रश्नाः समुत्थापिता आसन्। अत्र प्रभूतं साफल्यमभूत्।

हिमाचलसर्वकारः सर्वदैवात्र संस्कृतज्ञानां समुद्धाराय संस्कृतभाषाप्रचाराय च भृशं समालोचितः, प्रार्थितश्च। तत्रापि साफल्यं दृश्यते। हिमाचलप्रदेशे संस्कृतज्ञानां प्रबलतमसंगठनस्य निर्माणाय गतैकादशभिर्वर्षैर्यो हि संघर्षः दिव्यज्योतिषा कृतस्तस्य साफल्याङ्कुर प्रदेशीयसंस्कृत साहित्य सम्मेलनरूपेण समुदेतीति भृशं मे प्रमोदावहम्। इत्थं किल बहूनि साफल्यचिन्हानि पुरतोऽद्य गतवर्षाणां सततसंघर्षानन्तरं दृश्यन्ते।

## सर्वकारः

भारतस्य केन्द्रीयशिक्षामन्त्रणालयान्तर्गत संस्कृतशिक्षायाः सहायकपरामर्शदातृणां डा० श्री रामकरण महाभागानामपि वयं हृदयेन स्वागतं कुर्मः यत्ते प्रशंसनीयं कार्यं तत्र सम्पादयन्ति। इत्थमेव केन्द्रीयशिक्षामन्त्रणालयस्य अथ च प्रो. श्री शेरसिंह महाभागानां डा० श्री त्रिगुणसेनमहाभागानाञ्चापि वयं कृतज्ञा यत्ते संस्कृतसंरक्षणार्थं यथाशक्तिः कार्यं सम्पादयन्ति। हिमाचलप्रदेशसर्वकारोऽपि धन्यवादार्हः यतोहि तेन केन्द्रीय सर्वकारस्य संस्कृतपरीक्षाणां समतापत्रमक्षरशः स्वीकृतम्।

## अ० भा० संस्कृतसाहित्यसम्मेलनस्य केन्द्रीयशिक्षामन्त्रालयस्य च भाविकर्तव्यता

सम्मेलनं भारतसर्वकारं प्रतिबोधयेत् यद्यथाशीघ्रं भारतस्य सर्वेष-प्रान्तेषु प्रचलमानानां संस्कृतपरीक्षाणां नामपाठ्यक्रमादिसाम्यं स्यात्। भारतसर्वकारः केन्द्रीय संस्कृतमण्डलेन विनिर्मितं पाठ्यक्रमं शीघ्रमेव सर्वैः प्रान्तीयविश्वविद्यालयैः स्वीकृतं भवेत्। प्रान्तेषु तस्यैव पाठनञ्च संस्कृतविद्यालयेषु स्यात्। अनेन संस्कृतज्ञाः जीवनस्य सर्वेषु क्षेत्रेषु प्रवेशमर्हन्ति। मण्डलस्य वयं तन्निर्माणार्थं कृतज्ञाः स्मः। संस्कृतपाण्डित्यमपि रक्षितं भवति। संस्कृताध्यापकानां वेतनमानं—आंग्लभाषाध्यापकानां बी. ए., एम. ए,, उत्तीर्णानामिव स्यात्।

अन्ते च डा० श्री मण्डन मिश्र महाभागं डा० श्री रामकरण शर्मा महाभागं चाहर्निशं संस्कृतभाषासमुद्धार कर्मणि संलग्नतायै प्रार्थयामः। अस्माकं सर्वेषां सहयोगोऽत्र सर्वदा वर्तते।

दिव्यज्योतिर्हि पत्रं अस्माकमिच्छानुरूपं संस्कृतसमाजस्य सेवां कर्तुं प्रभवेदत्र तदर्थं सर्वैः पाठकैः लेखकैः संरक्षकैः शुभचिन्तकैश्चास्माकं सहयोगः पूर्ववदेव करणीयः। त्रुट्योऽस्माकीनाश्च क्षन्तव्याः। देशस्यैकतायै सर्वैः संस्कृत भाषा समाश्रयणीया।

## शास्त्रिणः—आचार्यादयश्च बी०, ए० एम० ए० समकक्षं समुद्घोषिताः

अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य, हिमाचलप्रदेशीयसंस्कृत साहित्यसम्मेलनस्य च सततजागरूकतया प्रयासैश्च तथा केन्द्रीयसंस्कृतमण्डलस्य सत्प्रयत्नैभरितसर्वकारेण संस्कृत परीक्षाणां किमपि स्तरनिर्धारणं पूर्वमेव कृतमासीत्। हिमाचलप्रदेशीयसर्वकारेण हिमाचलप्रदेश संस्कृतसाहित्यसम्मेलनस्य सततमाग्रहेण १७-९-६ : दिवसेऽस्य स्वीकृतिः चिरसंघर्षानन्तरं प्रदत्ता। अतः भारतसरकारस्य, केन्द्रीय संस्कृतमण्डलस्य, हिमाचलप्रदेश शिक्षाविभागस्य च वयं नितान्तं कृतज्ञाः सर्वेषां-अभिनन्दनं कुर्मः। संस्कृतज्ञानां ज्ञानाय भारतहिमाचलसर्वकारयोः पत्रेऽत्र प्रकाश्येते। अतः संस्कृत-परीक्षोत्तीर्णैरिदानीं स्व स्वविषये सर्वकारः स्वसमुचितवेतनप्राप्दये प्रार्थनीयः। सम्मेलनं दिव्यज्योतिः कार्यालयोऽप्यत्र सम्पर्कं संस्थापयन्नस्ति सर्वकारेण सह। —सम्पादकः।

No. F. 46—1/63—SU
Government of India
MINISTRY OF EDUCATION

For Syndicate meeting to
be held on 17-4-1965.
AGENDUM 41

New Delhi, Dated the 23rd Jan. 1964.

From
Shri P. N. Dhir,
Deputy Secretary to the Government of India.

To
Education Secretaries of the State Governments/
Union Territory Governments/Administrations, and
Registrars of all Universities.

Subject :—**Equivalence of Sanskrit examinations.**

Sir,

I am directed to say that the Central Sanskrit Board which advises the Government on all matters relating to the development of Sanskrit have recommended.

(a) That it may be impressed upon all the Universities that they should employ at least one traditional Sanskrit Scholar and the scholar so employed should enjoy the same status and pay scales as his counterparts trained on modern lines with equivalent degrees ;

(b) that the employment of traditional Sanskrit Pandits in High/Higher Secondary Schools/Colleges should also be given due encouragement Teachers so employed should be treated on a par with other teachers possessing equivalent qualifications of the general educational set-up.

With regard to this, the Board has suggested an interim equivalence of traditional Sanskrit examinations conducted by the various examining bodies with examinations in the general educational set up.

The suggestions of the Board have been accepted by Government of India. It would be appreciated if due consideration is given to these suggestions by the State Governments/Union Territories/Governments/Administrations/Universities.

I am also to send herewith a copy of the statement showing the names of the examining bodies, names of Sanskrit examinations conducted by them and the equivalence of the later with examinations in the general educational set up, for guidance in matters of employment of Sanskrit Pandits in Universities, Secondary/Higher Secondary Schools/Colleges. The Ministry may please be informed of the action taken in the matter in due course.

Kindly acknowledge receipt of this letter.

Yours faithfully,
Sd/-
(P. N. Dhir)
DEPUTY SECRETARY

Encl. Statement.

**Statement showing the names of the Examining Bodies, names of Sanskrit Examinations conducted by them and the equivalence of the letter with examinations in the General Educational set up.**

| Name of the examining Body | Name of the examination | Fqvivalent examination in the general educational set up. |
|---|---|---|
| 1. Varanasaya Sanskrit Vishvavidyalaya Varanasi. | Prathama<br>Madhyama<br>Shastri<br>Acharya<br>Siksha (Shastri) | Lower Secondary<br>Higeer Secondary<br>B. A.,<br>M. A.<br>B. Ed. or B. T. |
| 2. Bihar Sanskrit Association, Patna and Kameshwar Singh Sanskrit University, Darbanga. | Prathama<br>Madhyama<br>Shastri<br>Acharya. | Lower Secondary<br>Higher Secondary<br>B. A.,<br>M. A. |
| 3. M. S. University, Baroda. | Upadhaya<br>Visharada<br>Shastri<br>Acharyr. | Lower Secondary<br>Higher Secondary,<br>B. A.,<br>M. A. |
| 4. University of Madras, Madras and Annamalai University, Annamalai. | Siromani (Prel)<br>Siromani (Final) | B. A.<br>M. A. |
| 5. Brihad/Gujarat Sanskrit Parishad, Ahmedabad. | Madhyama<br>Shastri<br>Acharya. | Higher Secondary<br>B. A.,<br>M. A. |
| 6. Assam Government Sanskrit Samiti. | Adhya<br>Dwitiya<br>Upadhi | Lower Secondary,<br>Higher Secondary<br>B. A. |
| 7. Government of Rajasthan. | Praveshika<br>Upadhyaya<br>Shastri<br>Acharya | Lower Secondary<br>Higher Secondary<br>B. A.<br>M. A. |
| 8. Government of Mysore | Kavya<br>Sahitya<br>Vidwat Madhyama<br>Vidwat Uttama. | Lower Secondaay<br>Higher Secondary<br>B. A.<br>M. A. |
| 9. Bharatiya Vidya Bhawan, Bombay | Praveshika<br>Madhyama<br>Shastri<br>Acharya | Lower Secoudary<br>Higher Secondary<br>B. A.,<br>M. A. |
| 10. Tilak Maharashtra | Kovida<br>Visharda | Higher Secondary<br>B. A. |
| 11. Vedasastrottejaka Sabha Poona | Iyatta I<br>Kovida<br>Choodamani | Higher Secondary<br>B. A.<br>M. A. |
| 12. Government of Kerala | Kavyabhushana Sastrabhushana (Prelim). Sastrabhushana (Final). | Higher Secondary<br>B. A.<br>M. A. |
| 13. Government of Madras | O. S. L. C. (or) Entrance | Higher Secondary |
| 14. Government of Andhra | C. S. L. C. (or) Entrance | Higher Secondary |
| 15. University of Poona, Poona | Praveshika<br>Upadhyaya | Higher Secondary<br>B. A. |

| | | |
|---|---|---|
| 16. Benaras Hindu University, Varanasi | Pravesha<br>Madhyama<br>Shastri<br>Acharya | Lower Secondary<br>Higher Secondary<br>B. A,<br>M. A. |
| 17. Andhra University, Waltair | Vidya Praveena (Prelim)<br>Vidya Praveena (Final) | B. A.<br>M. A. |
| 18. Lucknow University, Lucknow | Shastri<br>Acharya | B. A.<br>M. A. |
| 19. Osmania University, Hyderabad | Diploma in Oriental learning with Sanskrit undr Parts II & III<br>B. O. L. with Sanskrit under Parts II & III | B. A.<br>M. A. |
| 20. Vangia Sanskrit Siksha Parishad Calcutta | Madhyama<br>Tiratha | B. A.<br>M. A. |
| 21. Punjab University, Chandigarh | Shastri (Hon. Sanskrit)<br>Acharya | B. A.<br>M. A. |
| 22. Gurukul Brindwan, Brindavan | Adhikari<br>Pandit<br>Siromani<br>Acharya | Lower Secondary<br>Higher Secondary<br>B. A.<br>M. A. |
| 23. Kendriya Sanskrit Vidyapeetha, Tirupati | Shastri (Siksha) | B. Ed. (or) B. T. |

No. 13=37=Education) (Eett)=
Government of Himachal Pradesh,
"EDUCATION DEPARTMENT."

From The Secretary (Education) to the Government Himachal Pradesh.

To All the Heads of Departments in Himachal Pradesh.

Dated Simla=4, the 17th September, 67.

Subject :—RECOGNITION OF SANSKRIT EXAMINATIONS—CONDUCTED BY VARIOUS BOARDS.

Sir,

I am directed to say that the Government of Himchal Pradesh has reccgnised the various Sanskrit Examination conducted by different Boards (list enclosed) as equivalent to examinations noted against each for purposes of employment to services and posts under the Himachal Pradesh Government.

Yours faithfully,
Miss. (K Pasricha),
Secretary (Education) to the
Government of Himachal Pradesh.

No. 12—37/61—EDU (ESTT)— Dated Simla —4, the 17 September, 67

Copy forwarded for information to all the District Education Officers in Himachal Pradesh.

2. The Principals of Government Colleges.
3. All the Education Officers at Headquarters.
4. All the Dealing Assistants in Establishment Section.

Director of Education,
Himachal Pradesh.

R. N. 6884/57 Rgistered No. P. 157

"आप जानते हैं, ये महिला कौन हैं? आप एक दफ्तर में 'आफिस सुपरिन्टेंडेन्ट' हैं। खुश और जीवन से सन्तुष्ट। मेहनत और असाधारण लगन के कारण एक मामूली 'टाइपिस्ट' से बढ़कर आज ये इस पद पर पहुंच गई हैं। इस सफलता का श्रेय ये अपनी छोटी सी गृहस्थी को देती हैं: "छोटी सी गृहस्थी है मेरी। पति और तीन बच्चे। कोई परेशानी या दिक्कत नहीं होती। हम दोनों इतना कमा लेते हैं कि हमारी सारी जरूरतें पूरी हो जाती हैं। तीसरे बच्चे के बाद ही हम दोनों ने फैसला कर लिया था कि अब हमें और बच्चे



नहीं चाहियें। घर में सुख-शान्ति रहती है, इसी लिये मैं दफ्तर में मन लगा कर काम कर पाती हूं।"

## ये खुश हैं —

## और आप?



